**अथ गौर्यादिमातृणां स्थापनं** ॥ हस्ते अक्षतान् गृहीत्वा ॥ कोष्टात् बहिः वायव्यां गणपतिं॥देवं नमामि गिरिजात्मजमेकदंतं सिंदूरचर्चितवपुः सुविशालशुंडं ॥ नागेंद्रमण्डिततनुर्युतसिद्धिबुद्धिसेव्यं सदा सुरगणैः सकलार्थसिद्ध्यै ॥ गणेश इहागच्छ इह तिष्ठ गणेशायनमः गणेशमावाहयामि स्थापयामि ॥ गौरीं ॥ एह्येहि नीलोत्पल तुलयनेत्रे श्वेताम्बरे प्रोज्वलशूलहस्ते ॥ नागेन्द्रकन्ये भुवनेश्वरि त्वं पूजां ग्रहीतुं मम देवि गौरि ॥ गौरि इहागच्छ इह तिष्ठ गौर्यै० गौरिमावाहयामि स्था० ॥ १ ॥ पद्मां ॥ एह्येहि पद्मे शशितुल्यवक्त्रे पङ्केरुहाभे

भूमौ काष्ठमयपीठे रक्तवस्त्रं प्रसार्य तदुपरि पंचदशाक्षतपुञ्जान् कुर्यात् ॥ तेषु पूगीफलानि निधाय ॥ तदुपरि गणेशेनाधिकाश्चतुर्दश मातृकाः स्थापनीयाः ॥ तत्रायं क्रमः ॥ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ हृष्टि-पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता॥गणेशेनाधिकाह्येता वृद्धौ पूज्याश्चतुर्दश ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥ केचित् ॥ श्रीर्लक्ष्मी धृति मेधा स्वाहा प्रज्ञा सरस्वती ॥ घृतेन मातरः सप्त पूज्याश्च विधिवत् क्रमात् ॥ एताः घृतमातृकाः नांगीकृताः शूद्रकमलाकरादिभिः ॥ कर्मादिषु तु सर्वेषु मातरः स गणाधिपाः ॥ पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः॥ मातृशब्देन सगणेशगौर्यादि च मनुष्यमातरो ग्राह्याः ॥ इति शूद्रकमलाकरे ॥ अत्र चतुर्दश मातृपदसमाहारान् मातरो लोकमातर इति सर्वासाम् विशेषणम् ॥ इति हेमाद्रौ कर्मकल्पद्रुमोक्तेश्च यत्र वृद्धिश्राद्धं तत्र मातृपूजा यत्र श्राद्धाभावस्तत्र मातृपूजनाभावः इति शातातपः ॥

अर्थ—गौर्यादि मातृकानुं स्थापन बाजठ अथवा पाटला वीगेरे मूकी तेनापर [illegible] ककडो पाथरी ॥ १५॥ ढगली काचा भातनी करी तेनापर सोपारी गोठववां.

शुभचक्रहस्ते ॥ सुरासुरेन्द्रैरभिवंदिते त्वं पूजा ग्रहीतुं मम यज्ञभूमौ ॥ पद्मे इहागच्छ इह तिष्ठ पद्मायै० पद्मामावाहयामि स्था० ॥ २ ॥ शचीं ॥ एह्येहि कार्तस्वर तुल्यवर्णे गजाभिरूढे जलजाभिनेत्रे ॥ शक्रप्रिये प्रोज्वलवज्रहस्ते पूजां ग्रहीतुं शचि देवि शीघ्रं ॥ शचि इहागच्छ इह तिष्ठ शच्यै नमः शचीमावाहयामि स्था० ॥३॥

अकृत्वा मातृपूजान्तु यः श्राद्धं परिवेषयेत् ॥ तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥ आदौ विनायकः पूज्यो अंते च कुलदेवतेति । कुडयलशिष्टवाक्यात् ॥ आदौ विनायकपूजनं ॥ कुडयलग्नां वसोर्धारां सप्तधारां घृतेन तु ॥ कारयेत् पंच धारां वा नातिनीचां न चोच्छ्रितां ॥ कुडयलग्नां मातृसमीपभित्तिलग्नां घृतेन पुत्रशिष्यादिना सप्त पंच वा धारां कारयेत् सप्त ॥ पंच भवत्यत्र ऐच्छिको विकल्पः ॥ वसुरभिर्वसुर्द्रव्यं वसवोष्टाविति कोशदर्शनात् च शतपथश्रुतेः ॥ वसोरग्नेरेव ॥ च परं कौशीतकीब्राह्मणवाक्यात् अग्निः सर्वदेवात्मकः ॥ अग्निर्वै वसवो देवता इति श्रुतेः ॥ तस्मात् अग्निमंत्रेण वसोर्धारा कर्तव्या ताः प्रादक्षिण्येन कुर्यात् दैवत्वात् नोच्छ्रितां नात्युच्चां नोत्तरतश्चेति कुड्ये कृतधारायां वसुधारायै नमः इत्याद्यैः नाममंत्रैः प्रणवादिनमोन्तैः ॥ प्रतीचिमारभ्य प्राग् पर्यंताः वा दक्षिणस्यामारभ्य उदीचि पर्यंताः प्रत्येकं काण्डानुसमयेन वा पदार्थानुसमयेन पूजयेत् ॥ ॥

---

वायव्य कोणे गणपतिनुं स्थापन करी नैर्ऋत्व खूणे गौरि तेनाउपर पद्मा ए प्रमाणे पश्चिमथी पूर्व तथा दक्षिणथी उत्तर स्थापन करवु. गौर्यादिनुं स्थापन थयापछी तेनी जमणी तरफ सात दगली मातनी भींजी करी तेनापर ब्राह्म्यादिमातृकानुं स्थापन करवु

मेधां॥एह्येहि मेधे शुभभूरिवस्त्रे पीताम्बरे पुस्तकपात्रहस्ते ॥ बुद्धिप्रदे हंससमाधिरूढे पूजां ग्रहीतुं मखमस्मदीयं ॥ मेधे इहागच्छ इह तिष्ठ ॥ मेधायै नमः ॥ मेधामावाहयामि स्थापयामि ॥ ४ ॥ सावित्रीं ॥ एह्येहि सावित्रि जगद्विधात्रि ब्रह्मप्रिये स्रुक्स्रुवपात्रहस्ते ॥ प्रतप्तजांबुनदतुल्यवर्णे पूजां ग्रहीतुं निजयज्ञभूमौ ॥ सावित्रि इहागच्छ इह तिष्ठ ॥ सावित्र्यै नमः॥सावित्रीमावाहयामि स्थापयामि ॥५॥विजयां॥एह्येहि शास्त्रास्त्रधरे कुमारि सुरासुराणां विजयप्रदात्रि ॥ त्रैलोक्यवन्द्ये शुभरत्नभूषे गृहाण पूजां विजये नमस्ते ॥ विजये इहागच्छ इह तिष्ठ ॥ विजयायै नमः ॥ विजयामावाहयामि स्थापयामि ॥६॥ जयां ॥ एह्येहि पद्मोरुहलोलनेत्रे जयप्रदे प्रोज्वलशक्तिहस्ते ॥ ब्रह्मादिदेवैरभिवंद्यमाने जयैव सिद्धिं कुरु सर्वदा मे ॥ जये इहागच्छ इह तिष्ठ ॥ जयायै नमः ॥ जयामावाहयामि स्थापयामि ॥७॥देवसेनां ॥ एह्येहि चापासिधरे कुमारि मयूरवाहि कमलायताक्षि ॥ इंद्रादि देवैरपिस्तूयमाने प्रयच्छति त्वं मम देवसेने ॥ देवसेने इहागच्छ इह तिष्ठ ॥ देवसेनायै नमः ॥ देवसेनामावाहयामि स्थापयामि ॥ ८ ॥ स्वधां ॥ एह्येहि वैश्वानरवल्लभे त्व कव्यं पितृभ्यः सततं वहन्ति ॥ स्वर्गाधिवासे शुभशक्तिहस्ते स्वधे तु नः पाहि मखं नमस्ते ॥ स्वधे इहागच्छ इह तिष्ठ ॥ स्वधायै नमः ॥ स्वधामावाहयामि स्थापयामि ॥९॥

स्वाहां ॥ एह्येहि वैश्वानरतुल्यदेहे तडित्प्रभे शक्तिधरे कुमारि ॥ हविर्गृहीत्वा सुरतृप्तिहेतोः स्वाहे च शीघ्रं मख-मस्मदीयं ॥ स्वाहे इहागच्छ इह तिष्ठ ॥ स्वाहायै नमः ॥ स्वाहामावाहयामि स्थापयामि ॥ १० ॥ हृष्टिं ॥ एह्येहि भक्ताभयदे कुमारि समस्तलोकप्रियहेतुमूर्ते ॥ प्रोत्फुल्लपंकेरुहलोलनेत्रे हृष्टे मखं पाहि शिवस्वरूपे॥ हृष्टे इहागच्छ इह तिष्ठ हृष्टयै नमः ॥ हृष्टिमावाहयामि स्थापयामि॥ ११ पुष्टिं॥एह्येहि पुष्टे शुभरत्नभूषे रक्तांबरे रक्तविशालनेत्रे ॥ भक्तप्रिये पुष्टिकरि त्रिलोके गृहाण पूजां शुभदे नमस्ते ॥ पुष्टे इहागच्छ इह तिष्ठ ॥ पुष्टयै नमः ॥ पुष्टिमावाहयामि स्थापयामि।१२।तुष्टिं एह्येहि तुष्टेऽखिललोकवंद्ये त्रैलोक्यसंतोपविधानदक्षे॥पीतांबरे शक्तिगदाब्जहस्ते वरप्रदे पाहि मखं नमस्ते॥ तुष्टे॥ इहागच्छ इह तिष्ठ॥तुष्टयै नमः॥तुष्टि मावाहयामि स्थापयामि॥१३॥कुलदेवताम्॥ एह्येहि दुर्गे दुरितौघनाशिनि प्रचंडदैत्यौघविनाशकारिणि ॥ शिवे महेशार्धशरीरधारिणि स्थिरा भव त्वं मम यज्ञकर्मणि॥ आत्मनः कुलदेवतायै नमः॥आत्मनः कुलदेवतामावाहयामि स्थापयामि॥ इति गौर्यादि मातृकास्थापनम्॥ अथ ब्र ह्म्यादि मातृकास्थापनाम्॥ १ ॥ ब्राह्मीं ॥ चतुर्मुखीं जगद्धात्रीं हंसारूढां वरप्रदां ॥ सृष्टिरूपां महाभागां

हवे गणपति सह गौर्यादि १४ मातृकानुं स्थापन यथा पछी तेनुं पूजन कह्या प्रमाणे करवुं, अथवा एनी साथे ब्राह्म्यादि मनुष्यमातृकानुं स्थापन करी एक तंत्रे प्रतिष्ठा करी पूजन करवुं, ए यथावकाश समजवुं; पूजन प्रकार शास्त्रार्थमां आपेलो छे.

ब्रह्माणीं तां नमाम्यहं ॥ ब्राह्मि इहागच्छ इह तिष्ठ ॥ ब्राह्म्यै नमः ॥ ब्राह्मीमावाहयामि स्थापयामि ॥१॥ माहेश्वरीं ॥ माहेश्वरीं नमाम्यद्य सृष्टिसंहारकारिणीं ॥ वृषारूढां शुभां शुभ्रां त्रिनेत्रां वरदां शिवां ॥ माहेश्वरि इहागच्छ इह तिष्ठ ॥ माहेश्वर्यै नमः ॥ माहेश्वरीमावाहयामि स्थापयामि ॥ २ ॥ कौमारीं ॥ एह्येहि कौमारि विधेहि शांतिं शक्तिं दधानेऽपि सदाभ्रमध्ये ॥ स्कंधाधिरूढे शिखिपुंगवाभ्यां मातः प्रसीद प्रसृतिं प्रयच्छ॥ कौमारि इहागच्छ इह तिष्ठ ॥ कौमार्यै नमः ॥ कौमारीमावाहयामि स्थापयामि ॥ ३ ॥ वैष्णवीं ॥ शंखचक्रगदापद्मधारिणीं कृष्णरूपिणीं ॥ स्थितिरूपां खगेन्द्रस्थां वैष्णवीं तां नमाम्यहम् ॥ वैष्णवि इहागच्छ इह तिष्ठ ॥ वैष्णव्यैनमः वैष्णवीमावाहयामि स्थापयामि ॥ ४॥ वाराहीं ॥ वाराहरूपिणीं देवीं दंष्ट्रोद्धृतवसुन्धराम् ॥ शुभदां पीतवसनां वाराहीं तां नमाम्यहं ॥ वाराहि इहागच्छ इह तिष्ठ ॥ वाराह्यै नमः ॥ वाराहीमावाहयामि स्थापयामि ॥ ५ ॥ इंद्राणीं ॥ इंद्राणीगजकुंभस्थां सहस्रनयनोज्वलाम् ॥ नमामि वरदां देवीं सर्वदेवैर्नमस्कृताम् ॥ इन्द्राणि इहागच्छ इह तिष्ठ ॥ इन्द्राण्यै नमः ॥ इन्द्राणीमावाहयामि स्थापयामि ॥ ६ ॥ चामुंडां ॥ चामुंडां मुंडमथनां मुंडमालोपशोभितां ॥ अट्टाट्टहास मुदितां नमाम्यात्मविभूतये ॥ चामुण्डे इहागच्छ इह तिष्ठ ॥ चामुण्डायै नमः ॥ चामुण्डामावाहयामि

स्थापयामि ॥ इत्यावाह्य॥ वसुधारायै नमः इत्यनेन घृतेन पंच सप्त वा धारां कुर्यात् ॥ गुडद्रव्यं तदुपरि स्थापयेत् तदुपरि रौप्यमुद्रामपि स्थापयेत् ॥ प्रतिष्ठां कुर्यात् ॥ प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां तां करोम्यत्र मंडले देवतै. सह ॥ सगणेशगौर्याद्यावाहितमातरः ब्राह्म्यादि सप्तमातरश्च सुप्रतिष्ठिताः वरदाः भवत ॥ सगणेश गौर्याद्यावाहितमातृभ्यो नमः ॥ आवाहनं स० ॥ सगणेशगौर्याद्या० आसनं स ० ॥ सगणेशगौर्याद्या० पाद्यं स०॥ सगणेशगौर्याद्या० अर्घ्यं स० ॥ सगणेशगौर्याद्या० आचमनीयं स० ॥ सगणेशगौर्याद्या० स्नानं स० ॥ सगणेशगौर्याद्या० वस्त्रं स० ॥ सगणेशगौर्याद्या० उपवीतं ०॥ सगणेशगौर्याद्या० गंधं स० ॥ सगणेशगौर्याद्या० पुष्पं स०॥ सगणेशगौर्या० अलंकारार्थं कुंकुमाक्षतान् स०॥ सगणेशगौर्याद्या० सुशोभनार्थं सौभाग्यद्रव्यं०स०॥सगणेशगौर्याद्या० धूपं स० सगणेशगौर्याद्या० दीपंस०॥सगणेशगौर्याद्या० नैवेद्यं स०॥ सगणेशगौर्याद्या० तांबूलं स० ॥ सगणेशगौर्याद्या० साङ्गुण्यार्थे दक्षिणांस० ॥ सगणेशगौर्याद्या० प्रदक्षिणां स० ॥ देवि प्रसीद परिपालय नोरिभीतेर्नित्यं यथा सुरवधादधुनैव सद्यः ॥ पापानि सर्व जगतां प्रशमं नयाशु उत्पातपातजनितांश्च

अर्थ—गौर्यादि जेटली मातृकाउ स्थापन कर्युं तेनी प्रतिष्ठा करी आवाहन आसन वीगेरेथी पुष्पांजली लगी पूजा करी प्रार्थना करी करेली पूजा अर्पण करवी ब्राह्म्यादिनुं स्थापन थया पछी सात चाला कर्या होय तेना उपर घीनी मंत्रथी धारा करवी गोळ तथा रूपानाणु चोडवु.

महोपसर्गान् ॥ सगणेशगौर्याद्या० पुष्पांजलिं स० ॥ अनेन पूजनेन सगणेशगौर्याद्यावाहितमातरः प्रीयंताम् ॥ हस्ते जलमादाय ॥ अद्येत्यादि० अस्मिन् कर्मणि आयुष्याभिवृद्ध्यर्थं ब्राह्मणद्वारा आयुःशांतिजपं करिष्ये इति संकल्प्य ॥ विप्राः पठेयुः॥ ते च ॥ रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान् ॥ त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयांति ॥ १ ॥ एतत् कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम् ॥ रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वांबिके तत् प्रकरोति कान्या ॥ २ ॥ विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या ॥ ममत्वगर्तेऽतिमहांधकारे विभ्रामयत्येतदतीव विश्वं ॥ ३ ॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र ॥ दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ॥ ४ ॥ विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम्॥विश्वेशवंद्या भवती भवन्ती विश्वाश्रया ये त्वयि भक्तिनम्राः ॥ ५ ॥ देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथा सुरवधादधुनैव सद्यः ॥ पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥६ ॥ हस्ते जलमादाय॥अद्येत्यादि० कृतेन आयुःशांतिजपाख्येन भगवान् कर्माधीशः

अर्थ–हाथमां जळ लइ आयुष्यवृद्धिमाटे संकल्पकरी ब्राह्मण पासे आयुष्य मंत्रपाठ करावी ते पाठकोने दक्षिणा आपी नमस्कार करवा ए प्रमाणे मातृकास्थापन करी नांदीश्राद्धनो आरंभ करवो.

प्रीयताम् ॥ तेन करिष्यमाणकर्मणि आयुष्याभिवृद्धिरस्तु ॥ आयुष्यमंत्रपाठकेभ्यो यथाशक्ति दक्षिणां दद्यात् ॥
इति मातृकास्थापनप्रयोगः॥ अथनांदीश्राद्धं॥ तत्र प्रथमं वैश्वदेवः तदभावे अद्येत्यादि० अस्मिन् कर्मणि
विहितवैश्वदेवाकरणजनितप्रत्यवायपरिहारार्थं करणजनितफलप्राप्त्यर्थं इदं तंडुलपात्रं सदक्षिणाकं शास्त्रोक्तपुण्यफ-
लप्राप्त्यर्थं गोत्राय ब्राह्मणाय संप्रदास्ये॥ तेन करिष्यमाणकर्मणि अविकारसिद्धिरस्तु॥ नांदीश्राद्धं सपिण्डकं अपि-

१ वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनमिति ॥ त्रिकाण्डिस्मरणात् नवग्रहयज्ञादौ नांदीश्राद्धमिति वाच्यम् ॥ कन्यापुत्रविवाहेषु प्रवे-
शे नववेश्मनि ॥ नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥ नांदीमुखान् पितॄनादौ तर्पयेत् प्रयतो
गृहीति शातिसोरे ॥ तत्र नांदीमुखाः पितरः पितामहाः प्रपितामहाः सपत्निकाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका इति षड्भ्यः
पितृभ्यः पार्वणवद् स्पष्टं ॥ कुशस्थानेषु दूर्वाः स्युः मंगलस्याभिवृद्धये ॥ इति आश्वलायनोक्तेः ॥ तत्र साकल्पिके समंत्रकावाहनार्घ्याग्नौकरण-
पिण्डदानविकिराक्षय्यस्वधावाचनप्रश्नेत्येतत् सप्तक वर्ज्यं ॥

१ हवे नांदीश्राद्ध करवु तेमां पहेलां वैश्वदेव करवो तेने बदले चोखा तथा घी ब्राह्मणने आपी संकल्प करी कर्म करवु वृद्धिश्राद्धमां कर्तानो बाप तथा
तेनो बाप तथा मा तथा तेनो बाप जीवतो होय तो करवानी जरुर नथी. वृद्धिश्राद्ध सवारमां करवु, ते बे प्रकारनु छे पिंडवाळु ने पिंड वगरनु तेमां पिंड-
वाळु करवु होय तो बधु श्राद्ध प्रमाणे करी पिंड मूकवा अने सांकल्पीक श्राद्ध होय तो पिंड मूकवानी जरुर नथी केटलेक ठेकाणे ब्राह्मणो संकल्प श्राद्ध
करवानु कहीं पिंड मूकावे छे जेथी बेउनुं फळ मळतु नथी संकल्प श्राद्धमां वांचाना तरभाणामां जव दगली भातनी करी सोपारी गोठवी जमणा हाथमां
पाणी लइ तेना उपर एटले वृद्धिश्राद्धमां सत्य अने वसुनामना विश्वेदेवा छे तेना उपर पाणी रेडवु पछी बीजा देवतापर तथा त्रीजा उपर एम अनुक्रमे पुजा करवी॥

ण्डकं वा फलं समानं ॥ तत्र सांकल्पेन विधिना अपिण्डकप्रयोगः ॥ ताम्रपात्रे त्रीणि वट्टानि वा अक्षतपुंजानि कृत्वा ॥ तस्योपरि पूगीफलानि निधाय ॥ दक्षिणहस्ते सजलदूर्वाङ्कुरान् गृहीत्वा ॥ सत्यवसुसंज्ञका विश्वेदेवाः नांदीमुखाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ गोत्राः पितृपितामहप्रपितामहाः सपत्नीकाः नांदीमुखाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ अद्य पूर्वोच्चरितशुभपुण्यतिथौ मम सुतस्य वा सुतायाः विवाहांगत्वेन सांकल्पेन विधिना नांदीश्राद्धं करिष्ये ॥ आसनदानं ॥ सत्यवसुसं-

अनाम्ना अतिलैश्चैव नांदीश्राद्धं च सव्यतः ॥ इति संग्रहे व्रतयज्ञविवाहेषु श्राद्धहोमार्चने जपे ॥ आरब्धे सूतकं न स्यात् अनारब्धे तु सूतकं ॥ इति विष्णुपुराणे ॥ प्रारंभो वरणं यज्ञे संकल्पव्रतसत्रयोः नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति ब्रह्मपुराणे ॥ विश्वेदेवाः कार्यपरत्वे ॥ इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके ॥ नांदीमुखे सत्यवसू काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥ नैमित्तिके कामकालावेव सर्वत्र कीर्तयेत् ॥ इतिश्राद्धमयूखे ॥

---

संकल्प विधिथी नांदीश्राद्ध करवु तेमा आवाहन, अर्घ, अग्नौकरण, पिण्डदान, विकिर, अक्षय्य, स्वधा, वाचन प्रश्न, गन्धादिनो त्याग करवो कह्योछे, तेमज नाम तथा तिल तथा अपसव्यथी पण करवु नही. १ यज्ञमा, वरण व्रत अने सत्र तेमा संकल्प– विवाहमा– नांदीश्राद्ध– अने श्राद्धमा रसोइ– वीगेरे

ज्ञकानां विश्वेषां देवानां नांदीमुखाना इदमासनं सुखासनं नांदीश्राद्धे क्षणौ क्रीयेतां तथा प्राप्नुताम् भवन्तौ प्राप्नवाव ॥ गोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां नांदीमुखानां इदमासनं सुखासनं नांदीश्राद्धे क्षणाः क्रीयंताम् तथा प्राप्नुवन्तु भवंतः प्राप्नवाम ॥ द्वितीयगोत्राणां मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकानां नांदीमुखानां इदमासनं सुखासनं नांदीश्राद्धे क्षणाः क्रीयंतां तथा प्राप्नुवन्तु भवंतः प्राप्नुवाम ॥ गंधादिदानं ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्य इदं गंधाद्यर्चनं नमः संपद्यंतां वृद्धिः ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्योः यथादत्तं गंधाद्यर्चनं नमः संपद्यंतां वृद्धिः ॥ द्वितीयगोत्रेभ्यो मातामह-प्रमातामह-वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नांदीमुखेभ्यः यथादत्तं गंधाद्यर्चनं नमः संपद्यंतां वृद्धिः ॥ भोजननिष्क्रयद्रव्यदानं ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यो युग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं अमृतरूपेण नमः संपद्यंतां वृद्धिः ॥ गोत्रेभ्यः

नांदीश्राद्धे अन्नाभावे आमं आमाभावे हिरण्यं हिरण्याभावे युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिकिंचिद्द्रव्यदानं ॥ इति धर्मसिंधौ॥

करवाथी सूतकादिनो बाध लागतो नथी. पछी आसननो संकल्प करी स्थापित देवोपर पाणी मुकवुं तथा तेनापर चंदन फुल चडाववा तथा ब्राह्मणभोजन विगेरेनो संकल्प करवो.

पितृपितामह प्रपितामहेभ्योः सपत्नीकेभ्यो नांदीमुखेभ्योःयुग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं अमृतरूपेण नमः सपद्यंतां वृद्धिः ॥ द्वितीयगोत्रेभ्यो मातामह प्रमातामह वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदी-मुखेभ्यो युग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं अमृतरूपेण नमः संपद्यंतां वृद्धिः ॥ सक्षीरमुदकदानं ॥ नांदीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः प्रीयंतां ॥ गोत्राः पितृपितामह प्रपितामहाः सपत्नीकाः नांदीमुखाः प्रीयंतां ॥ द्वितीयगोत्राः मातामह प्रमातामह वृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः प्रीयंतां ॥आशिषोग्रहणं ॥ गोत्रं नो वर्द्धतां ॥ वर्द्धता वो गोत्रं॥दातारो नोऽभिवर्द्धंतां अभिवर्द्धंतां वो दातारः॥ संततिर्नोऽभिवर्द्धत अभिवर्द्धतां वः संततिः॥ श्रद्धा च नो माव्यगमत ॥ माव्यगमद् वः श्रद्धाः ॥ बहुदेयं च नोऽस्तु ॥ अस्तु वो बहुदेयं ॥ अन्नं च नो बहु भवेत ॥ भवतु वो बह्वन्नं ॥ अतिथिंश्च लभामहै ॥ लभंतां वो

• • प्रीयंतामित्यत्र यवक्षीरजलानि दद्यात् ॥ इति प्रयोगरत्नगदाधरौ॥प्रीत्यै सक्षीरदानं ॥ आभ्युदयिकश्राद्धं तु आचारात् ॥

---

दूधमां पाणी रेडींने नांदीमुख देवोने आपवाथी ते प्रसन्न थई कुटुंबविगेरेमा थतो क्लेश नाश करी प्रीती उत्पन्न करावेछे एवुं ग्रंथकारनु केहेवुंछे ॥ पात्रमां जल लइ तेमां दुध रेडी ते देवताओने अर्पण करवाथी वंशवृद्धि थायछे. ब्राह्मणोने नांदिश्रद्ध थयुं ए प्रश्नो विगेरे पुछवा. दरेक देवना उद्देश-थी रुपियो पा आपवानो संप्रदाय छे—नांदीश्राद्धमां जे न्यूनाधिक थयुं होय तेनी परिपूर्ती करी संकल्प करी देवताने अरपण करवुं, ए प्रमाणे नांदीश्राद्ध

अतिथयः ॥ याचितारश्च नः संतु ॥ संतु वो याचितारः॥ एता आशिषः सत्याः संतु ॥ संत्वेताः सत्या आशिषः॥ दक्षिणादानं ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यःकृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे॥ गोत्रेभ्यः पितृपितामह प्रपितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे॥द्वितीय गोत्रेभ्यो मातामह प्रमातामह वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ ततो नांदीश्राद्धं संपन्नं ॥ सुसंपन्नं ॥ जलं गृहीत्वा ॥ अनेन नांदीश्राद्धकर्मणा कृतेन श्रीनांदीमुखदेवताः प्रीयंतां ॥ अस्मिन्नांदीश्राद्धे न्यूनातिरिक्तो यो विधिः ॥ स उपविष्टब्राह्मणानां वचनात् नांदीमुखप्रसादात् सर्वं परिपूर्णं ॥ अस्तु परिपूर्णम् ॥

## ॥ अथ अर्घवंदनं ॥

पाद्यार्घपात्राणां स्थापनं ॥ तत्र ॥ कांस्यसंपुटे ताम्रसंपुटे वा ॥ शरावे ॥ आपः क्षीरं

२ आचारात् अर्घवंदनम्॥ब्राह्मणवरणार्थं पाद्यार्घवंदनमिति केचित् ॥ कुष्टं मासी हरिद्रे द्वे सुराशैलेयचंदनं ॥ त्वचा चंपकमुस्ता च सर्वौषध्यो दश स्मृताः ॥ इति भविष्यपुराणे ॥

थयुं. केटलाक आभ्युदयिक श्राद्ध करेछे, ते, आचार छे माटे मुकयुं नथी. १ अर्घवंदन करवु तेमा पूजनने माटे लावेला कलशो तेमां मंत्रोषी

कुशाग्राणि दधिदूर्वाक्षतास्तथा ॥ तिलाः सिद्धार्थकाश्चैव अंष्टागोऽर्घप्रकीर्तितः ॥ पुरतः धान्यराशिं कृत्वा ॥ तदुपरि कलशं निधाय ॥ विश्वाधारासीति मंत्रेण भूमीं स्पृष्ट्वा ॥ विश्वाधारासि धरणी शेषनागोपरिस्थिता ॥ धृताचादिवराहेण सर्वकामफलप्रदा ॥ भूम्यै नमः ॥ हेमरूप्यादिसंभूतं ताम्रजं सुदृढं नवं ॥ कलशं धौतकल्मापं छिद्रवर्णविवर्जितं ॥ जीवनं सर्वजीवानां पावनं पावनात्मकं ॥ बीजं सर्वौषधीनां च तज्जलं पूरयाम्यहं ॥ सूत्रं कार्पाससंभूतं ब्रह्मणा निर्मितं पुरा ॥ येन बद्धं जगत्सर्वं वेष्टनं कलशस्य च ॥ ओषधिः सर्ववृक्षाणां तृणगुल्मलतास्तथा ॥ दूर्वासर्षपसंयुक्ताः सर्वौषध्यः पुनातु माम् ॥ विविधं पुष्पसंजातं देवानां प्रीतिवर्धनं ॥ क्षिप्तं यत्कार्यसंभूतं कलशे निक्षिपाम्यहं ॥ अश्वत्थोदुंबरप्लक्षनूतन्यग्रोधपल्लवाः ॥ पंचभंगा इति प्रोक्ताः सर्वकर्मसु-

पीपलो–उमडो–पीपरडी–आंबो–वड॥घोडो–हाथी–राफडो–संगम–एटले महानदी समुद्रनो–खाडो–राज्य–गायनी ॥ एटली ठेकाणेथी मटोडी लावी कलशमां नाखवी.

---

जल–नाडु–कंकु–चंदन फुल औषधि–सोपारी–पंचरत्न–पंचपल्लव नाखवा तथा०॥–।।साडा नव आना नाखवानो संप्रदाय छे, एनुं कारण एटलुंज छे के कलश रूपानो जोइये तेने बदले ए मुकवानो संप्रदाय छे.

कलशमां उपर कह्या प्रमाणे ते बधुं मुकी तेपर नालिकेर मूकी ढांकवुं, पछी मटोडीनुं कोडियुं अथवा कांसानी वाडकी तेमां–पाणी–दूध–दहीं–

हिरण्यं गर्भ-
शोभनाः ॥ पूगीफलमिदं दिव्यं पवित्रं पापनाशनं ॥ पुत्रसौख्यादिफलदं कलशे निक्षिपाम्यहं ॥ हिरण्यं गर्भ-
गर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदं कलशे प्रक्षिपाम्यहं ॥ अँश्वस्थानाद्गजस्थाना द्वल्मीकात्संगमाद्ध्र-
दात् ॥ राजद्वाराच्च गोगोष्ठान्मृदमानीय निक्षिपेत् ॥ कनकं कुलिशं नीलं पद्मरागं च मौक्तिकं ॥ एतानि
पंच रत्नानि कलशे प्रक्षिपाम्यहं ॥ पिधानं सर्ववस्तूनां सर्वकार्यार्थसाधनं पूर्णस्तु कलशो येन पात्रं तत्कल-
शोपरि ॥ अनेन पाद्यपात्रोपरि ताम्रमयं पूर्णपात्रं निधाय ॥ तदुपरि नालिकेरं निधाय । तत्र अर्घ्यपात्रोपरि
सवर्णपात्रं पिधाय रक्तसूत्रं वेष्टयित्वा ॥ पाद्यार्घपात्रे गंधपुष्पाक्षतैरभ्यर्च्य ॥ यजमानहस्ते मांगल्यं कृत्वा ।
धान्यदूर्वाप्रक्षेपः ॥ यजमानः स्वासनात् पश्चिमतः उत्तराभिमुखो भूत्वा तिष्ठेत् ॥ आचार्यः पत्नीहस्ते कलशं
दद्यात्॥यजमानहस्ते अर्घ्यं च॥सुमुहूर्तादि कर्त्तव्यं शोभने मंडपे द्विजः॥ शांतिपाठोऽर्घदानं च प्रच्छापूर्वं समाच-

दूर्वा--अक्षत--तिल--सरसव--विगेरे नांखी तेना पर बीजुं पात्र ढांकी तेनापर नाडुं मुकी एक पाद्यनो कलश तथा अर्घने अबील गुलालथी शुशोभित करवा.
पाद्यार्घ करवु एवा आचारछे. गोरे सपत्नीक यजमानना हाथमां कुंकुम तथा मातलाखी यजमान पत्नीना हाथमां कलश तथा यजमानना हाथमां
अर्घ आपी पाटलानी नीचे उत्तरनुं मोडु करावी उभाराखी मंत्र भणाववा. नहीं तो ब्राह्मणोने मोडेथी सांभळी, अर्थ समजी, आ पाद्यपात्र तथा अर्घलो एम
कहि आपी पोताना आसन पर बेसवुं.

रेत् ॥ १ ॥ मम क्षेमायुरारोग्यं परमश्रीसुखाप्तये ॥ सबंधुसुतभार्यस्य वांछितार्थस्य सिद्धये ॥ २ ॥ आधिव्याधि-जरामृत्युभयशोकापन्हुतये ॥ भूतभव्यभविष्येति त्रिविधोत्पातशांतये ॥ ३ ॥ सर्वैर्न साममध्वस्तैर्निरस्तैश्च सुरद्विपाम् ॥ सर्वसौभाग्यसंपत्यै निष्पत्यै अस्य कर्मणः ॥ ४ ॥ आचार्यादिसमस्तानां जापकानां द्विजन्मनाम्॥ पादार्घं प्रकरिष्येऽहं आज्ञां देहि ममाध्वरे ॥ ५ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ अनुगृण्हंतु मामद्य ग्रहयज्ञाख्यकर्मणि ॥ ६ ॥ स्वस्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः॥ श्रोत्रियाः सत्यवादाश्च देवध्या-नरताः सदा ॥ ७ ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥ अंगीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः ॥ ॥ ८ ॥ यथोक्तनियमैर्युक्ता मंत्रार्थे स्थिरबुद्धयः ॥ यत्कृपालोचनात् सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥ ९ ॥ स्वागतं भो द्विजश्रेष्ठा मदनुग्रहकारकाः ॥ अयमर्घमिदं पाद्यं भवाद्भिः प्रतिगृह्यतां ॥ १० ॥ अर्घोऽर्घोऽर्घः ॥ प्रतिगृह्यतां

* गृह्य--मंत्रभाष्ये ॥ आचार्यं वृणुयात्तत्पूर्वं ब्रह्माणं तदनंतरं ॥ परशुरामेणापि ॥ आचार्यादिसमस्तानां जापकानां द्विजन्मनां ॥ आचार्यं प्राङ्मुखमुपविश्य ॥

---

अर्थ -उपरना मंत्रोभणी रहे ब्राह्मणो, त्यारपछी यजमाने केहेवुं प्रतिगृह्यताम् पछी ब्राह्मणोए प्रतिगृह्णामि कहि ते बेउना हाथमाथी कळश अने लइ नीचे मुकवा यजमाने पोताना पाटलापर बेसी ब्राह्मणवरणनो संकल्प करवो.

इति यजमानः ॥प्रतिगृण्हामि इति द्विजः ॥ जलं गृहीत्वा ॥ आचार्यादिऋत्विजां वरणमहं करिष्ये ॥ यजमानः
हस्ते सयवपुष्पपूगीफलं गृहीत्वा ॥ शक्रादीनां यथा स्वर्गे आचार्यो वा बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्ना
चार्यो भव सुव्रत ॥ मंत्रमूर्तिभवन्नाथ संसारोच्छेदकारकः ॥ पूजार्हस्तु यथादेवः कुहधर्मो हुतिंचन ॥
संसारभयभीतेने अयं यज्ञः सुभक्तितः ॥ प्रारब्धस्त्वत्प्रसादेन निर्विघ्नं मे भवेदिति ॥ भगवन्सर्वधर्मज्ञ
सर्वधर्मपरायण ॥ सर्वशास्त्रार्थतत्वज्ञ सर्वशास्त्रविशारद ॥ अनादिजन्मसंतान ह्यप्रमेय भवार्णवे ॥ अद्य
मे ह्युत्तमं जन्म अद्य मे सफलं धनं ॥ अद्य मे जननोच्छित्तिरद्य मे परमं पदं ॥ मोचितोऽहं त्वया
नाथ दुच्छेद्याद्भवबंधनात् ॥ संत्रातोऽहं त्वया अस्मादप्रमेयाद्भवार्णवात् ॥ मुक्तोऽहं मर्त्यसंसारात् प्रपन्नोऽहं तवा-
न्तिकम् ॥ पूगीफलं आचार्याय दत्वा ॥ पुष्पं शिरसि निधाय ॥ यवैः जानु स्पृशेत अमुकगोत्रोऽमुकप्रवरो

यजमान उदङ्मुखो भूत्वा ॥ सयवपूगीफलपुष्पे गृहीत्व अंजलिं बध्वा आचार्यं प्रार्थयेत् ॥

—पछी यजमाने उत्तराभिमुखे बेसी हाथमा सोपारी अक्षत पुष्प लइ आचार्यवरण पेहेलाथी करवु तेमा प्रथम प्रार्थना करी सोपारी आपी आचार्यना
गोठणे जवथी अडकी गोत्रादि ब्राह्मणना बोल्यापछी यजमाने पोताना गोत्रोचार बोली अमुककर्ममा आचार्यकर्म करवा हु तमने आचार्य करउं, एम कही
जव आपी पुष्प माथा पर मुकवु तथा आचार्यना ने पग तरभाणमा मुकवा. पाद्य पात्रनो कळशथे तेमाथी पाणी त्रण वखत पगउपर रेडी आचार्यना

ऽमुकयजमानोऽहं करिष्यमाणकर्मणि आचार्यकर्मकरणार्थं अमुकगोत्रं अमुकप्रवरं अमुकवेदांतर्गतअमुकशाखाध्यायिनममुकशर्माणं ब्राह्मणं साक्षतचंदनवासोभिः आचार्यत्वेन त्वामहं व्रणे व्रतोऽस्मि ॥ व्रताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं इदमत्र चंदनमालिकां च हस्ते कंकणबंधनम् ॥ प्रतिज्ञावरणं चैव स्वस्तिपुण्याहवाचनम् ॥ कपिलाय नमस्तुभ्यं रक्षाकंकणबंधनम् ॥ हस्तमुद्रा कर्णमुद्रा आसनादिसामग्रीं यज्ञोपवीतं वस्त्रं च दत्वा ॥

स्वनामगोत्रप्रवरान्संकीर्त्य ब्राह्मणस्य च ॥ अस्मिन्यज्ञेऽमुकं देवं त्वामहं ऋत्विजं वृणे ॥ इत्युक्त्वा तु फलं दद्यात्करे तत्रैव पूजनम् ॥ इति कल्पवल्याम् ॥ तत्र ब्रह्मा स्वशाखीयः कर्तव्य ॥

---

हाथेथी पग धोइ. पछी अर्घ करेलोछे तेमाथी एक वखत पाणी आचार्यना बेहाथमा आपवु. पछी शुद्धपात्रमाथी एक आचमनी भरिने जळ पाद्य हाथमां आपवुं पछी चदन फुलमाथापर मुकवु. तथा कपाळे चदन करी कुंकुमनो चालो करी चोखा चोडी पुष्पनो हार पेहेरावी जमणे हाथे नाडु बांधवुं. तथा आसन गौमुखी माळा आचमनी तरभाण पात्रोपपात्र ( अथवा प्यालो ) तथा वस्त्र उपवस्त्र जनोइ मुद्रिका विगेरे. लावेली वस्तुओ तथा दक्षिणा आचार्यने आपी केहेवु के हे आचार्य ! ज्यालगि आ मारुं कार्य संपूर्ण थाय त्यासुधी तमारे आचार्यनु कर्त्तव्य कर्म करवुं तेटलामाटे तमने आचार्य कर्याछे. एम कह्यापछी आचार्ये केहेवु तमो उत्तम कार्य करवा तैयार थयाछो, तो सागकर्मकराववा आचार्य थांउछुं. पछी आचार्यना पूजनना क्रम प्रमाणे यजमानने शाखानोज ब्रह्मा करवो तेना मंत्रोविगेरेथी प्रार्थना करी ब्रह्मानु वरण करवुं तथा बीजागाणपत्यादि तथा द्वारपाळ विगेरे ऋत्विजोनुं जुदुं पूजन श्रद्धापूर्वक करवुं.

यावत्कर्म समाप्यते तावत्त्वं आचार्यो भव ॥ भवामि इत्याचार्यः ॥ पूर्ववत् ॥ यवपुष्पपूगीफलं गृहीत्वा ॥ ब्रह्माणं वृणुयात् ॥ यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः ॥ तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ॥ आवाहयामि देवेशं ब्रह्माणं कमलोद्भवं ॥ चतुर्वेदसमायुक्तं सर्वसिद्धांतवेदिनम् ॥ प्रार्थ्य ॥ पूगीफलं हस्ते दत्वा पुष्पं शिरसि निधाय यवैर्जानु स्पृशेत् ॥ अमुकगोत्रोऽमुकप्रवरोऽमुकयजमानोऽहं करिष्यमाणकर्मण्यंगभूतकृताकृतावेक्षणार्थं अमुकगोत्रममुकप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणं साक्षतद्रव्यचंदनवासोभिः ब्रह्मत्वेन त्वामहं वृणे व्रतोऽस्मि इति प्रतिवचनम् ॥ व्रताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं इदमत्र चंदन म लिकां च हस्ते कंकणबंधनम् ॥ प्रतिज्ञा वरणं चैव० ॥ हस्तमुद्रा कर्णमुद्रा० ॥ यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव ॥ भवामि ॥ साक्षतपूगीफलं गृहीत्वा गाणपत्यं प्रार्थयेत् ॥ ऋत्विग्भिः सहितो ब्रह्मन्संयुतैः सुसमाहितैः ॥ आचार्येण च संयुक्तः कुरु कर्म यथोदितं ॥ वांछितार्थफलावाप्त्यै पूजितोऽसि सुरासुरैः ॥ निर्विघ्नकार्यसंसिद्ध्यै त्वामहं गणपं वृणे ॥ त्वन्नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणः ॥ आचार्यादिभिः सयुक्तः कुरु कर्म यथोदितं ॥ फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमानोऽहं ० ॥ अमुकगोत्रं० ब्राह्मणं गाणपत्यत्वेन त्वामहं वृणे ॥

व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं गाणपत्यो भव॥ सदस्यं वृणुयात् ॥कर्मणामुपदेष्टारं सर्वकर्मविदुत्तमम् ॥ कर्मिणं वेदतत्त्वज्ञं सदस्यं त्वामहं वृणे ॥ फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमानोऽहं० ॥ अमुकगोत्रं० ब्राह्मणं सादस्यत्वेन त्वामहं वृणे व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं सादस्यो भव ॥ सर्वोपद्रष्टारं वृणुयात् ॥ अस्य यागस्य निष्पत्तौ भवंतोऽभ्यर्थिता मया ॥ सर्वोपद्रष्टकर्तव्यं कर्मेदं विधिपूर्वकं ॥ फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमानोऽहं० ॥ अमुकगोत्रं० ब्राह्मणं सर्वोपद्रष्टारं त्वामहं वृणे ॥ व्रतोऽस्मि पाद्यं०यावत्कर्म समाप्यते तावत्त्वं सर्वोपद्रष्टा भव॥ऋग्वेदिनं वृणुयात्॥ऋग्वेदः पद्म पत्राक्षो गायत्रः सोमदैवतः॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव॥फलं दत्वा पूर्ववत् पूजनं ॥अमुकगोत्र०यजमानोऽहं ॥ अमुकगोत्रं० ब्राह्मणं ऋग्वेदिनं त्वामहं वृणे व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं ऋग्वेदसूक्तजापको भव ॥ यजुर्वेदिनं वृणुयात्॥कातराक्षो यजुर्वेदः त्रैष्टु भो विष्णुदैवतः॥ काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव॥फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमानोऽहं० ॥ अमुकगोत्रं ब्राह्मणं यजुर्वेदिनं त्वामहं वृणे व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं यजुर्वेदसूक्तजापको भव ॥ सामवेदिनं वृणुयात् ॥ सामवेदस्तु पिंगाक्षो जाग्रतः

शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमा-
नोऽहं० ॥ अमुकगोत्रं० ब्राह्मणं सामवेदिनं त्वामहं वृणे व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं सामवे-
दसूक्तजापको भव ॥ अथर्ववेदिनं वृणुयात् ॥ बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः ॥ वैशंपायनविप्रेन्द्र ऋत्विक
त्वं मे मखे भव ॥ फलं दत्वा पूर्ववत्पूजनं ॥ अमुकगोत्र० यजमानोऽहं० ॥ अमुकगोत्रं० ब्राह्मणं अथर्ववेदिनं
त्वामहं वृणे व्रतोऽस्मि पाद्यं० यावत्कर्म समाप्यते तावत्त्वं अथर्ववेदसूक्तजापको भव ॥ ऋत्विक्वरणं ॥ भगव-
न्सर्वधर्मज्ञ सर्वधर्मभृतांवर ॥ वितते मम यज्ञेऽस्मिन् ऋत्विक्त्वं भव सुव्रत ॥ फलं दत्वा पूर्ववत्पूजनं ॥अमुक-
गोत्र० यजमानोऽहं० ॥ अमुकगोत्रं० ब्राह्मणं ऋत्विजं वृणे व्रतोऽस्मि पाद्यं०यावत्कर्म समाप्यते तावत्त्वं ऋत्विक्
भव ॥ अथ ब्राह्मणप्रार्थना ॥ क्षमा तपोदयादानं सत्यं शौचं च संयमः ॥ विद्याविनयसंयुक्ता ब्राह्मणा लोक-

अर्थ—अहो' माहारायज्ञमां-आवेला द्विजो तमो विद्यादि गुणोये करि युक्तओ. तथा सत्य शौचादिये करि चालवावाळा छो तथा देवताओपर श्रद्धा राखवावाळा छो तथा धर्म शास्त्रमां कहेला नीयमो पाळनार ओ तथा संध्या स्नानादि वेदने मानवावाळा छो एम तमोने हुं मानु छुं. तो हे भूमिदेवो ! आ मारा कार्यमां श्रद्धाराखी निर्विघ्न परिपूर्णकरि आपजुं. आ प्रमाणे ब्राह्मणोनी प्रार्थना अनेक प्रकारे करवी.

तारकाः ॥ यजनं याजनं चैव ध्ययनाध्यापनं तथा ॥ दानप्रतिग्रहो होमः षट्कर्मनिरतः सदा ॥ त्रिकालसंध्याकरणे स्वाध्यायाचरणे तथा ॥ नानाशास्त्राभ्यासरताः संसारोच्छेद कारकाः ॥ भवद्दर्शनमात्रेण मुक्तास्तु भवबंधनात् ॥ अग्निशुश्रूषणरता धर्ममार्गे दृढव्रताः ॥ परदारपरद्रव्यपरानिंदाविवर्जिताः ॥ भवतां दर्शनेनैव शुद्ध्यंति मलिनो जनाः ॥ भूमीदेवास्तु विप्रा वै त्रिषु लोकेषु विश्रुताः ॥ अस्मिन्कर्मणि सर्वे वै सहायाः सन्तु सर्वदा ॥ ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः ॥ वेदानां चैव दातारः पातारः सर्वदेहिनां ॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ॥ देवानां पितॄणां चैव तृप्त्यर्थं याजकाः कृताः ॥ येषां देहे स्थिता वेदाः पावयंति जगत्रयं ॥ रक्षन्तु सततं ते मां जपयज्ञेव्यवस्थिताः ॥ ब्राह्मणा जंगमं तीर्थं त्रिषु लोकेषु विश्रुतं ॥ तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवादाश्च देवध्यानरताःसदा ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिंयांति नरोत्तमाः ॥ अंगीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता मंत्रार्थे स्थिरबुद्धयः ॥यत्कृपालोचनात्सर्वाः ऋद्धयो वृद्धिमाप्नुयुः ॥ मम यज्ञे जपे पूज्याः सन्तु मे नियमान्विताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥

देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषिणः संतु मा सन्तु परनिंदकाः॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ इति संप्रार्थ्य ॥ ब्राह्मणाः ब्रूयुः ॥ वयं नियमसंयुक्ता तव कर्तव्यतत्पराः ॥ कार्यं तव करिष्यामो विधिपूर्वं न संशयः॥ कर्तव्या नो क्रियाशंका वेदाज्ञा हि गरीयसी ॥ वैदिका नहि वेदाज्ञां लंघयंति कदाचन ॥ त्वदधीनं त्वया कार्यं निःशंकं श्रद्धयान्वितम् ॥ वयं सर्वं करिष्यामस्तव कार्यं न संशयः ॥ यजमानः ॥ धन्योऽहं कृतकृत्योऽहं सौभाग्योऽहं धरातले ॥ प्रसादाद्भवतांविप्राः पवित्रोऽहं कृतोऽधुना ॥ मेरुमंदरतुल्योऽहं भवद्भिर्भूतलेकृतः॥ यशोविस्तारि तं मेद्य लक्ष्मीवृद्धिश्च मे कृताः॥ अद्यमे पितरः तृप्ताः पवित्रं मे कुलं कृतं ॥ देवतानां प्रसादोऽपि जातो मे ह्येव निर्मलः ॥ कार्यं कर्तुं न मे शक्तिर्नैव दातुं च दक्षिणा ॥ न च पूजाविधानं च नमस्कारं करोम्यहं ॥ शक्त्या सर्वं करिष्यामि वचनात् भवतां ततः ॥ आशिर्वादाच्च सिद्धानां पूर्णं सर्वं भविष्यति ॥ इति आचार्यादीन्संप्रार्थ्य ॥ वरणश्राद्धंकुर्यात् ॥ स्वपादौ करौ प्रक्षाल्याचम्य॥ अक्षतैर्दिग्बंधः॥

आचाराद्वरणश्राद्धम् ॥ परशुरामोक्तेः ॥ वर्गादिभ्यः समस्तेभ्य ऋत्विग्भ्य इदमासनम् ॥ गंधपुष्पं च धूपं च वरणश्राद्धे प्रकल्पयेत्

अर्थ—ब्राह्मणोए कहेवुं के तमो श्रद्धापूर्वक करोछो तो अमो शास्त्रमां कहेला नियमो पाळी सांग कर्म करावीशुं. वळी यजमाने केहवुंके हे भूदेवो! तमारा योग्य आपनानी कोइ पण रीतनी मारी शक्ति नथी पण जे माराथी बने तेमां ज संतोष मानी दया राखी आशिर्वाद आपवो. हवे पूजेला ब्राह्मणोनुं वरण

स्वस्तियाचा० ॥ चतुर्षु दिक्षु अक्षतान् विकीर्य ॥ आयांतु सांकल्पेन विधिना वरणश्राद्धोपहाराः पवित्राःसन्तु देशकालपात्रान्नद्रव्यश्रद्धा संपदस्तु ॥ अद्येत्यादि० अमुकवारान्वितायां सांकल्पेनविधिना वरणश्राद्धं करिष्ये ॥ हस्ते जलं गृहीत्वा ॥ आचार्यादिऋत्विजाम् आसनं संपन्नं सुसंपन्नं आचार्यादिऋत्विग्भ्यः यथादत्तं गंधाद्यर्चनं संपन्नं सुसंपन्नं अर्चनविधेः परिपूर्णतास्तु दीपादीनां प्रदत्तानां इदं वो ज्योतिः सूज्योतिः शेषोपचारा विधिवद्भवंतु ॥ आचार्यादिऋत्विग्भ्यो अद्येह्नि भोजनं संपन्नं सुसंपन्नं आचार्यादिऋत्विग्भ्यो दक्षिणाः संपन्नाः सुसंपन्नाः ॥ तिलकमाशिर्वादः ॥ कौतुकबंधनं ॥ येन बद्धो बली राजा दानवेंद्रो महाबलः ॥ तेन

आचारात् कंकण बंधनंपरं च भविष्ये--दुर्वा यवाङ्कुरा श्चैव बालकं नूतपल्लवाः ॥ हरिद्राद्वयसिद्धार्थः शिखिपत्रो रगत्वचः ॥ कंकणौषधयश्चैताः कौतुकाख्या नव स्मृताः ॥ अथवा ॥ यवाकुरांस्तथा दुर्वाः शर्षपान् गंधसंयुतान् ॥ गोमयं दधिसंयुक्तं कारयेत्ताम्रभाजने ॥ तद्राजनं करपुटे धृत्वा मंत्रान् पठेच्च मोक्षयेत् ॥

---

श्राद्ध करवुं. तेमां, पहेलाथी यजमाने पोताना बेउहाथ पग धोइ आचमनकरी चारदिशाए अक्षतवेरी पूजाना साहित्यने प्रोक्षण करी संकल्प करवो, तथा आसन गंध भोजन दक्षणा विगेरे आपेली वस्तुओ तथा आपवानी वस्तुओनो संकल्प करवो, तथा ब्राह्मणे यजमानने चांलोकरी हाथे नाडु बांधी यजमानपत्नीने डाबाहाथे नाडु बांधवुं.

त्वामपि बध्नामि रक्षे रक्ष हिमाचल ॥ १ ॥ मांगल्यतन्तुना येन भर्तुर्जीवनहेतुना ॥ हस्ते बध्नामि सुभगे सजीव शरदः शतं ॥ २ ॥ पत्नीवामकरे सूत्रं बध्वा सौख्यधनागमम् ॥ बहु संपत्ति मारोग्यं रक्षार्थे कंकणं शुभं ॥ इति कौतुक बंधनम् ॥ **अथ स्वस्ति पुण्याह वाचनम्** ॥ पूर्वं संपादित कलशे वा विश्वाधारासीत्यादिपूर्वोक्तमंत्रैः कलशे पूर्णपात्रान्तं कृत्वा ॥ ततः स्वाग्रे धान्यराशौ कलशं संस्थाप्य ॥ तत्र गंधदूर्वापंचपल्लवफल हेम पंचरत्नादीनि क्षिप्त्वा तदुपरि धान्यपूरितपूर्ण पात्रं निधाय तदुपरि नालिकेरं निधाय वाससि वेष्टयित्वा ॥ कलशं स्पृष्ट्वा ॥ आवाहयामि कलशं सप्तसागरसंस्थितम् सर्वलक्षणसंपूर्णं नदीनां च स-

परशुराम ॥ कृत्वैवं वरुणं पूर्वं वाच्यं पुण्याहवाचनमिति ॥ अथ पंचोपचाराः ॥ गंध, पुष्प, धूप, दीप, नैवेद्य, इति पंचकं ॥ पंचोपचारमाख्यातं पूजने तत्वविद् बुधैः ॥ इति कमलाकरे ॥ पुण्याहवाचनमृद्धौ पूर्तौ च ॥ इति कात्यायनः ॥ ऋद्धिश्चैव तु संस्काराः विवाहांताः प्रकीर्तिताः ॥ प्रतिष्ठोद्यापनादीनी पूर्तं कर्म यथोचितं.

---

अर्थ—हेवे स्वस्तिवाचन करवुं तेमां पोताना सामी चोखानी ढगलीकरी तेनापर कलश मुकी तेमां अगाडीना पत्रमां कहेला "विश्वाधारासीति" आरंभी पूर्ण पात्र लगीना मंत्रो भणी कलशना पदार्थ मूकववा तथा वरुणनो आवाहननो मंत्रभणी आवाहनकरी प्रतिष्ठाकरी पंचोपचारथी पूजन करावडुं.

माकुलम् ॥ १ ॥ उत्तरे हिमवन्तस्य क्षीरोदानामसागरः ॥ उत्पन्नं कलशं तत्र सर्वतीर्थं समन्वितः ॥ २ ॥ कला-कलाहिदेवानां दानवानां तथैव च ॥ कलापि सकला ग्राह्या सौम्य मांगल्य कर्मणि ॥ ३ ॥ निर्मितोऽयं तदा तत्र कलशं तेन उच्यते ॥ रचितं विश्वरूपेण कलशं कामरूपिणम् ॥ ४ ॥ सर्वे समुद्रा सरितस्तीर्थानि जलदान-दाः ॥ आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ५ ॥ अर्जुनी गोमती चैव चंद्रभागा सरस्वती ॥ कावेरी कृष्ण-वेणी च गंगाचैव महानदी ॥ ६ ॥ क्षिप्रा वेत्रवती पूर्णाचर्मन्वती च वेदिका ॥ तापी गोदावरी चैव नर्मदा च मही तथा ॥ ७ ॥ पाराशरी पयोष्णी च सरयू गण्डकी तथा ॥ ज्वालेश्वरं महातीर्थं तीर्थं वाऽमरकंटकम् ॥ ८ ॥ केदारंच प्रयागं च यमुना सुरदीर्घिका ॥ विन्ध्यपादे च तीर्थानि श्रीपादे यानि तानि च ॥ प्रभासं पुष्करं चैव नैमिषं च हिमालयं ॥ ९ ॥ शालिग्रामं च गोकर्णं कुंभेऽस्मिन् संप्रतिष्ठितम् ॥ पृथिव्यां यानि तीर्थानि पाताले सन्ति यानि च ॥ १० ॥ तानि तिष्ठंति कुंभेऽस्मिन्वरुणं कल्पयाम्यहम् ॥ गंगे च यमुनेचैव गोदावरी सरस्वती ॥ ११ ॥ नर्मदे सिंधुकावेरी जलेस्मिन्सान्निधिं कुरु ॥ सर्वे समुद्रा सरित स्तीर्थानि जलदानदाः ॥ १२ ॥ आयान्तु यजमानस्य दुरित क्षयकारकाः ॥ वृषारूढा सरोजाक्षी पद्महस्तां बुजेक्षणा ॥ १३ ॥ आयान्तु

यमुना देवी कूर्म वाहन गासदा ॥ प्राची सरस्वती पुण्या तथा मंदाकिनी परा ॥ १४ ॥ एतानद्यश्च
तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥ तानि सर्वाणि कुंभेस्मिन्विशंतु ब्रह्मशासनात् ॥ १५ ॥ तीर्थान्यावाह्य ॥
अक्षतान् गृहीत्वा ॥ प्रतिष्ठासर्वं० अस्मिन्कलशे वरुणः सुप्रातिष्ठितो वरदो भव ॥ प्रतिष्ठान्ते पूजनं अस्मिन्कलशे
वरुणाय नमः गंधंस० अस्मिन्कलशे वरुणायनमः पुष्पं स० अस्मि० वरु० धूपं स० अस्मि० वरु० दीपं स० अस्मि०
वरु० नैवेद्यं स० अस्मिन्कलशे सुशोभनार्थे सौभाग्यद्रव्याणि स० अनेन पंचोपचारैःपूजनेन वरुणः प्रीयतां हस्ते
पुष्पं गृहीत्वा ॥ प्रार्थयेत् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तस्यस्थितो ब्रह्मा मध्ये मातृगणा
स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सप्त सप्त द्विपा वसुंधरा ॥ ऋगवेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ २ ॥ अंगै-
श्चसहिताः सर्वे कलशं तु समाश्रिताः ॥ शंखस्फटिकवर्णाभः श्वेतहाराम्बरावृतः ॥ ३ ॥ पाशहस्त महाबाहो
दयां कुरु दयानिधे ॥ पाशपाणे नमस्तुभ्यं पद्मिनी जीवनाय च ॥ पुण्याहवाचनं यावत्तावत्त्वं सुस्थिरो भव
॥ ४ ॥ नमो नमस्ते स्फटिकप्रभाय शुश्वेतहाराय सुमंगलाय ॥ सुपाशहस्ताय झषासनाय जलाधिनाथाय
नमो नमस्ते ॥ वरुणाय नमः प्रार्थनापूर्वकं नमस्कारं समर्पयामि ॥ मातृदेवो भव पितृदेवो भव ॥ आचार्यदेवो

भव ॥ अतिथिदेवो भव ॥ आशिषः प्रार्थयन्ते ॥ अवनि कृत जानुमंडलः कमलमुकुलसदृशमंजालिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णं कलशं धारयित्वा ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेन आयुः प्रमाणेन पुण्याहं दीर्घमायुरस्त्वितिभवंतो ब्रुवन्तु ॥ इति यजमानः ॥ पुंण्यं पुण्याहं दीर्घमायुरस्तुइति द्विजाः ॥ एवं वारत्रयं कृत्वा ॥ कलशं भूमौ स्वस्थाने संस्थाप्य ॥ ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु ॥ शिवा आपः संतु ॥

तत्र वेदव्यासः ॥ संपूज्य गंधमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ॥ धर्मकर्मणि मांगल्ये संग्रामेऽद्भुतदर्शने ॥ १ ॥ पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ॥ ओंकारपूर्वं विप्रस्य भवेत्पुण्याहवाचनं ॥ एतदेव निरोंकारं कुर्यात् क्षत्रिवैश्ययोः ॥ उपांशु च तथा वैश्ये स्वस्ति शूद्रे च कारयेत् ॥ स्थापयेदव्रणं कुंभं पंचपल्लवसंयुतं ॥ पंचरत्नसमायुक्तं युग्मवस्त्रेण वेष्टितं ॥ संगृह्य पाणिनाचार्यो वाचयेत्स्वस्ति वाचनम् ॥

* आचार्यलक्षणं ॥ तद्दक्षिणतः प्रश्नप्रतिवचनसमर्थान् तद्दिवसे श्राद्धादिष्वभुक्तवन्तो निषिद्धप्रतिग्रहनिवृत्तान्तः कर्णाच्छुचिं सोत्तरीयान्दर्भ पवित्रपाणियुग्मान् ब्राह्मणा नुदङ्मुखान् आसने उपविश्य ॥ गुर्वादीन्नत्वाततकलशहस्ताभ्यामादाय आशिषः प्रार्थयेत् ॥ ३ ॥ एवं सर्वत्र यजमानवचनोत्तरं ब्राह्मणाः प्रतिवचनं दद्युः ॥

---

अर्थ–पंचोपचार पूजनकरी हाथमा फूललइ प्रार्थनाकरी नमस्कारकरवो पछी यजमानना हाथमां कंकु भात दरोइ आपी बेगोठणपृथ्वीने अडकाडी, कमलना जेवा बे हाथ एकत्र करी कलशने पोतानामाथे अडकाडी राखवो.( पछी ते कलश माथे तथा पृथ्वीपरत्रणवखत अडकाडवो )( एरुदीठे.) कलशनीचे मूकी पाछा स्वस्थतेसी चार ब्राह्मणना हाथमां चंदन फूल चोखा पान सोपारी दक्षिणा आपी फरी पाणी आपवुं.

संतु शिवा आपः सौमनस्यमस्तु ॥ अस्तु सौमनस्यं ॥ अक्षतं चारिष्टं चास्तु ॥ अस्त्वक्षतमरिष्टं च ॥ गधाः पांतु सौमंगल्यं चास्त्वितिभवंतो ब्रवन्तु ॥ गंधाः पांतु सौमंगल्यं चास्तु ॥ एवं सर्वत्र ॥ अक्षताः पांतु आयुष्यमस्त्वि० अक्षताः पांतुआयुष्यमस्तु ॥ पुष्पाणि पांतु सौश्रियमस्त्विति० पुष्पाणि पांतु सौश्रियमस्तु ॥ तांबूलानि पान्तु ऐश्वर्यमस्त्विति० तांबूलानी पान्तु ऐश्वर्य मस्तु ॥ दक्षिणाः पान्तु बहुधनमस्त्विति० दक्षिणाःपांतु बहुधनमस्तु ॥ पुनरत्राः पान्तु स्वार्चितमस्त्वि० पुनरत्राः पान्तु स्वार्चितमस्तु ॥ यजमानो आचार्यादीन् प्रणम्य श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्त्वि० श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु ॥ अनेन यजमानमूर्ध्न्यभिषिंचेयुः॥यंकृत्वा सर्ववेद यज्ञक्रिया करणकर्मारंभाः प्रवर्तंते॥ तमहमोंकार मादिंकृत्वा ऋग्यजुः सामाशीर्वचनं

प्रतिष्ठासंग्रहे ॥ अपां मध्ये स्थिता देवाः सर्वे प्साप्सु प्रतिष्ठिताः ॥ ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु नः ॥ १ ॥ लक्ष्मीर्वसति पुष्पाग्रे लक्ष्मीर्वसति पुष्करे ॥ सा मे वसतु वै नित्यं सौमनस्यं तथास्तु नः ॥ २ ॥ अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशो बलं ॥ यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥ ३ ॥ ततो अमरे ॥ अरिष्टमशुभे तक्रे सूतिकागार आसवे शुभे मरणचिन्हेप्यिति मेदिनि ॥

---

अर्थ—यजमाने आपेलुं पाणी यजमानना माथापर छांटवुं, तथा अक्षतल्ड यजमानपत्नीना तथा यजमानना खोळामां मंत्रो भणीनांखवा ॥

वहुनऋपिमतं समनुज्ञातं भवाद्भिरनुज्ञातःपुण्यं पुण्याहं वाचयिष्ये॥वाच्यतां ॥ इति तैरुक्ते ॥ब्राह्मणानां हस्ते अक्षतान् दद्यात्॥तेचाशिषोदद्युः॥यजमानः॥माविघ्नं माच मे पापं मासन्तु परिपंथिनः॥सौम्या भवन्तु सुखिनः सर्वेलोकाः सुखावहाः ॥ इति कर्ता वदेत ॥ विप्रास्तथास्त्वित्युक्त्वा ॥ करोतु स्वस्ति ते ब्रह्मा स्वस्तिचापि द्विजातयः ॥ सरीसृपाश्च ये श्रेष्ठास्तेभ्य स्ते स्वस्ति सर्वदा ॥ १ ॥ ययातिर्नहुष श्चैव धुन्धुमारो भगीरथः ॥ तुभ्यं राजर्षयःसर्वे स्वस्ति कुर्वन्तु नित्यशः ॥ २॥ स्वस्ति तेऽस्तु द्विपादेभ्य श्चतुष्पादेभ्य एव च ॥ स्वस्त्यस्तुपावकेभ्यश्च सर्वेभ्यः स्वास्ति सर्वदा ॥ ३ ॥ स्वाहा स्वधा शचीचैव स्वस्ति कुर्वन्तु ते सदा ॥ लक्ष्मी ररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ॥ ४ ॥ असितो देवलश्चैव विश्वामित्रस्तथांगिरः ॥ स्वस्ति तेऽद्यःप्रयच्छन्तु कार्तिकेयश्च षण्मुखः ॥ ५ ॥ विवस्वान् भगवान्स्वस्ति करोतु तव सर्वशः ॥ दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः ॥ ६ ॥ अंधस्ताद्धरणी योऽसौ नागो धारयते सदा ॥ शेषश्च पन्नगश्रेष्ठःस्वस्ति तुभ्यं प्रयच्छतु ॥ ७ ॥ इति वदेयुः ॥ ( इत्येता ऋचःपुण्याहे ब्रूयात) व्रत जप नियम तप स्वाध्याय ऋतु दया दमदान विशिष्ठानां सर्वेषां ब्राह्मणानां मनः समाधीयतां ॥ समाहितमनसःस्म इति द्विजाः ॥ प्रसीदंतु भवंतः प्रसन्नाः स्मः ॥ शांतिरस्तु ॥

पुष्टिरस्तु ॥ तुष्टिरस्तु
अस्तु शांतिः इति द्विजाः ॥ प्रतिवचनं सर्वत्र दद्युः ॥ अस्त्वित्युक्ते कुंभाज्जलं पातयेत् ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥शिवं कर्मास्तु ॥ कर्मसमृद्धिरस्तु ॥ धर्मसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धिरस्तु ॥ पुत्रपौत्रसमृद्धिरस्तु ॥ इष्टसंपदस्तु ॥ अरिष्टनिरसनमस्तु॥ यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरे कर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तरः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥ तिथि करण मुहूर्तनक्षत्र ग्रहलग्नसंपदस्तु ॥ तिथिकरण मुहूर्तनक्षत्रग्रह लग्नाधिदेवताः प्रीयंताम् ॥ तिथिकरणे सुमुहूर्ते सनक्षत्रे सग्रहे साधिदैवते प्रीयेताम् ॥ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् ॥ इन्द्र पुरोगाः मरुद्गणाः प्रीयन्ताम् ॥ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्॥ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ विष्णुपुरोगाः सर्वेदेवाः प्रीयन्ताम् ॥ ब्रह्म पुरोगाः सर्वे वेदाःप्रीयन्ताम् ॥

यद्यपि शौनकेन शांतिरस्त्वित्यादीनि पंचदश वचनान्युक्तानि ॥ तथापि प्रयोगरत्नादौ ॥ अधिकान्यपि दृश्यंते ॥ तदनुसारेणात्र लिखितानि ॥ अस्त्वितिसमये पात्रमध्ये जलमोचनं कार्यमित्युक्तं प्रयोगचूडामणौ ॥ पात्रे मुंचंति अरिष्टांबुनिरसनं द्विवारं पश्चिमेत्युक्तं ॥ प्रयोगचूडामणौ शांतिरस्त्विति विप्रांताः शब्दाः पंचदशैव तु ॥ संस्कारभास्करे ॥ प्रीयतां वाक्यपठितैरुदकस्य निषेचनम् ॥

अर्थ–शांतिरस्तुथी आरम करीने "अविघ्नमस्तु" अहीं लगीना वाक्यो बोलता जइने कलशनुं पाणि पश्चिमदिशामा नाखवु ॥ उपरना प्रीयता वाक्यो बोलता जई तरभाणामा पाणी नाखवुं ॥

वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ॥ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्॥ श्रीसरस्वत्यौ प्रीयेताम् ॥ श्रद्धामेधे प्रीयेताम् ॥ भगवती कात्यायनी प्रीयताम्॥ भगवती माहेश्वरी प्रीयताम् ॥ भगवती ऋद्धिकरी प्रीयताम्॥भगवती सिद्धिकरी प्रीयताम् ॥ भगवती पुष्टिकरी प्रीयताम् ॥ भगवती तुष्टिकरी प्रीयताम् ॥ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ सर्वाः कुलदेवताः प्रीयन्ताम् ॥ सर्वाः ग्रामदेवताः प्रीयन्ताम् ॥ हताश्च ब्रह्मद्विषः हताश्च परिपंथिनः ॥ हताश्च विघ्नकर्तारः ॥ शत्रवः पराभवं यान्तु ॥ शाम्यन्तु घोराणि शाम्यन्तु पापानि शाम्यन्त्वितयः ॥ शुभानि वर्द्धन्ताम् ॥ शिवा आपः सन्तु ॥ शिवा ऋतवः सन्तु ॥ शिवा ओषधयः सन्तु ॥ शिवा नद्यः सन्तु ॥ शिवा गिरयः सन्तु ॥ शिवा अतिथयः सन्तु ॥शिवा अग्नयः सन्तु॥ शिवाऽऽहुतयः सन्तु ॥ अहोरात्रे शिवे स्याताम् ॥ शुक्रांगारकबुधबृहस्पति शनैश्चर राहु केतु सोमसहित आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ भगवान् नारायणः प्रीयताम् ॥ भगवान् पर्जन्यः प्रीयताम् ॥ भगवान् स्वामीमहासेनः

हताश्च ब्रह्म द्विषेत्यादीनां शाम्यन्त्वित्यंतानां पूर्वस्यां जलप्रक्षेपणोक्तः प्रयोगचूडामणौ ॥

---

हताश्च ब्रह्मद्विष अहींथी आरभी शाम्यन्तु लगीना वाक्यो बोली आचमनीवती पूर्वमा पाणी नाखवु ॥ तेमा हताश्चथी ते शाम्यन्तु पापानि लगीना वाक्योतु जळ नीचे नाखवु ॥

प्रीयताम् ॥ पुण्याह कालान्न वाचयिष्ये इति यजमानः ॥ वाच्यतामिति द्विजाः ॥दीयते यत्र दानानि पूजान्ते च द्विजातयः ॥ दृश्यते यत्र मांगल्यं तत्पुण्याहं सदाऽस्तु मे ॥ ब्राह्मयं पुण्यं महर्यञ्च सृष्ट्युत्पादनकारकं ॥ वेदवृक्षोद्भवेन्नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान् नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय ग्रहयज्ञाख्यस्य कर्मणः पुंण्याहं भवन्तो ब्रुवन्तु ॥ अस्तु पुण्याहं ॥ एवं वचनं प्रतिवचनं च त्रिवारं सर्वत्र पठेत् ॥ मृकण्डसूनुरायुर्यत् ध्रुवलोमशयोस्तथा ॥ आयुषा तेन संयुक्ता जीवन्तु शरदः

दान भागवते॥पुण्यहादिभिरभ्यास मंत्रमध्योर्ध्वनिस्वनैः ॥ पुण्यं कल्याणऋद्धिश्च स्वस्ति श्रीयादि पंचकम् ॥प्रणवाद्यं निराचष्टे भवत्पूर्वं भवन्त्विति ॥ मत्युक्तविषये मैपास्त्रिवारं स्वस्तिरित्यतः ॥ उदात्तानुदात्तस्वरितश्चेति ॥ मंत्रोहीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो नतमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुःस्वरतोऽपराधात् ॥ इति शिक्षायाम् ॥

---

सकुटुम्बी, अशीर्वादनी इच्छावाळो तथा महात्माओने नमवावाळो एवो जे हूं ते मारे अर्थे हे ब्राह्मणो ! तमो पुण्यकारी दिवस कहो, एम यजमाने त्रण वखत कह्याथी ब्राह्मणोए त्रण वखत पुण्यकारी दिवस थाओ तेम कहेवुं, ए प्रमाणे मारुं कल्याण थाओ, मारे घेर ऋद्धि वधो, मने स्वस्ति प्राप्त थाओ, तथा श्री प्राप्त थाओ एमदरेक वाक्यो यजमानना कह्यापछी ब्राह्मणोए त्रण वखत ह्रस्व दीर्घ अने प्लुत उच्चारथी ब्राह्मणोए अस्तु शब्द पूर्वक कहेवां. पुण्याहं भवन्तो ब्रुवन्तु ए प्रमाणे कल्याणं० ऋद्धि० स्वस्ति० श्रीरस्तु० ए पांचे वखत यजमाने बोलवुं ॥

शतम् ॥ पृथिव्यामुधृता यान्तु यत्कयाणं पुराकृतं ॥ ऋषिभिः सिद्धगंधर्वै स्तत्कल्याणं ब्रुवन्तु नः ॥ भो ब्रा-
ह्मणाः मह्यं० अस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु ॥ ३ ॥ कल्याणं एवं पूर्ववत् त्रिः ॥ प्रजापतिर्लोकपालो
धाता ब्रह्माऽच देवराट्॥भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वदा॥सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिःकृता ॥
संपूर्णा पूर्णचन्द्रेया तामृद्धिं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं० अस्य कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु ॥ कर्म
ऋध्यताम् । एवं त्रिः ॥ ३ ॥ आयुष्मते स्वस्तिमते यजमानाय दाशुषे ॥ क्रियास्त्वाशिषः सन्तु ऋत्विग्भिर्वेद-
पारगैः॥स्वस्ति या चाविनाशाख्या पुण्यकल्याणवृद्धिदा॥ विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः॥भो ब्राह्मणा
मह्यं०अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु॥आयुष्मते स्वस्ति।एवं त्रिः॥३॥समुद्रमथनाज्जाता जगदानंदकारिका।हरि-
प्रियां च मांगल्या श्रियं तां च ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु अस्तुश्रीः
तिलकं कृत्वा ॥स्वस्ति या चाविनाशाख्या धर्मकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः॥
अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः

परिपूर्णोऽस्तु ॥ अस्तुपरिपूर्णः ॥ **अथाभिषेकः** ॥ अभिषेके पत्नी वामतः॥ एकस्मिन्पात्रे वरुणोदकं गृही-
त्वा अविधुराश्चत्वारो ब्राह्मणाः दूर्वाऽग्रपल्लवैर्यजमानमभिषिंचेयुः ॥ सुरास्त्वामाभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखंडलोऽग्निर्भ-
गवान्यमो वै वरुणस्तथा॥ २ ॥वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु
ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः॥ बुद्धिर्लज्जा वपुः शांति स्तुष्टिः कांतिश्च मातरः॥४॥
एतास्त्वामभिषिंचंतु धर्मपत्न्यः समागताः ॥ आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः॥ ५ ॥गृहास्त्वामभिषिंच-
न्तु राहुकेतुश्च तर्पिताः॥देवदानवगंधर्वा यक्षराक्षसपन्नगाः॥६॥ऋषयो मुनयो गावो देवमातर एव च॥ देवपत्न्यो
द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ औषधानि च

१ सव्ये पत्नी त्रिगुरुस्थाने पितॄणां पादपूजने ॥ रथस्यारोहणे चैव अभिषेके विसर्जने ॥

१ स्वस्ति वाचन थया पछी यजमनाने तिलक करी पछी यजमान पत्नीने यजमाननी डाबी बाजूए बेसाडी स्वस्ति वाचनना कळशमांथी पाणी लई आंबाना पांत्रावडे मंत्रो भणी चार ब्राह्मणोए दंपतीपर प्रोक्षण करवुं ॥ ए प्रमाणे अभिषेक थया पछी यजमाने पोताने स्थाने बेसी ब्राह्मणोने दक्षिणा आपवी ॥

रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये॥९॥सहस्राक्षं शतधारं च ऋषिभिः पावनं कृतं॥तेन त्वामभिषिंचामि पावमानं पुनन्तु ते ॥ १० ॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः। भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः॥११॥यत्ते केशे च दौर्भाग्ये सीमंते यच्च मूर्धनि ॥ ललाटे कर्णयोरक्ष्णोरापस्तु घ्नंतु भेषजम् ॥ १२ ॥ इत्यभिषेकः ॥ तत्र कुंडमंडपपक्षे आचार्यः ॥ अद्येत्यादि० मम संकल्पोक्ताख्ये कर्मणि मंडपकुंडादीनां प्रोक्षणार्थं च रक्षार्थं दिग्रक्षणं पंचगव्यकरणं करिष्ये इतिसंकल्प्य ॥ पूर्ववत् दिग्रक्षणादि कृत्वा मंत्रैः प्रोक्षणं कुर्यात ॥ अद्येत्यादि० करिष्यमाणकर्मनिमित्तं वर्धनी कलशस्थापनपूर्वकं पूजनं करिष्ये ॥ इति संकल्प्य ॥ कलशस्थापनमंत्रैः वर्धिन्योपरि पूर्णपात्रान्तं कृत्वा पूजयेत् ॥ वर्धिन्यै नमः ॥ गंधं० पुष्पं० धूपं० दीपं नैवेद्यं० एवं पंचोपचारान् कृत्वा ॥ वर्धिनीकलशं

---

* अर्थ–कुंड मंडप कर्याहोयतो तेनुं रक्षण तथा प्रोक्षणमाटे दिग्रक्षण तथा पंचगव्य करणनो संकल्पकरी पत्र, ८ प्रमाणे करावनुं.

*प्रोक्षण विगेरेकर्या पछी वर्धिनीकलश स्थापनना मंत्रो पत्र २३ मा प्रमाणे करी पूजा प्रार्थना करी दम्पतीए कलशहाथमां लइ मंडपनी प्रदक्षिणा करी ब्राह्मणोए मंत्रभणता आवी पश्चिम द्वारनुं यथोक्त पूजनकरी मंडपप्रवेश करवो तथा इशान दिशामा चोखानुं "सामणुं" करी कलश मूकी नमस्कार पूर्वक प्रार्थना करवी.

गृहीत्वा ॥ यजमानो सपत्निकः सपरिवारः सालंकृतः मंत्रनिर्घोषसुवासिनीगीतवाद्यनिःस्वनैः मंगलसू-
क्तानि पठन् ॥ मंडपे प्रदक्षिणीकृत्य ॥ पश्चिमद्वारे मंडपं प्रविशेत् ॥ मंडपे वेद्युपरि
ईशानभागे अक्षताष्टदलोपरि वर्धिनीं संस्थाप्य प्रार्थयेत ॥ मृन्मयि त्वं महाभागा सदा तीर्थोदकान्विता ॥
वर्द्धनी त्वं जगन्माता भव त्वं कुलवर्द्धिनी ॥ तव तोयेन कलशान्पूजार्थे पूरयाम्यहम् ॥ इति श्रीजयानंदात्मज
मूलशंकरशर्मणा विरचितायां विवाहकौमुद्यां पुण्याहवाचनांतप्रयोगः ॥ ॥ **अथ मंडपप्रवेशः** ॥ ब्राह्मणैः
सह मङ्गलवाद्यघोषैश्च सह गोधूमगुडलवणदीपादिभिः सहितः ब्राह्मणपुरःसरः शुक्लमाल्यानुलेपनस्ता-
दृशपुत्रपौत्रादिसमेतः सुशकुनसूचिताभ्युदयः सपत्नीको यजमानो दूर्वाम्रपल्लवनालिकेरादियुतं जलपूर्णं कल-

---

अर्थ–हवे पछी मंडपप्रवेश करवो–सुवासिनी मंगलवाजित्र शांति पाठ भणता ब्राह्मणो तथा मंगल द्रव्यादि लइ कर्ता स्त्री पुरुष पुत्र पौत्रादिये परिवृत्त थइ, जेमां दरोइ आंबाना पातरा नालीकेर मुकेलुं छे एवो जल पुरित कुंभ लइ मंडपनी प्रदक्षिणा करी मंडपना पश्चिमद्वार अगाडी उभा रहेवुं. पछी संकल्प करी उमरानी ठेकाणे कुंकुमनो यंत्र काढी तेना परिवृत रहेला देवताओनुं स्थापन तथा पंचोपचारे पूजन करवुं. पछी विघ्नोने नाशकरनारा मंत्रो भणी पोतानुं जमणुं अंग प्रथमथी अंदर स्पर्श करे एवी रीते प्रवेश करवो तथा पत्नीना हाथमां रहेलो कुंभ इशान्य दिशामां अक्षत मुकी मुकवो, एने मंडप प्रवेश कहे छे अथवा वास्तु करी नवा गृहमां प्रवेश करवो होय तो एवी रीतेज करी गृहमां प्रवेश करवो ॥

शं गृहीत्वा ॥ मंडपं प्रदक्षिणीकृत्य॥ पश्चिमद्वारे स्थित्वा द्वारशाखां पूजयेत् ॥ अद्येत्यादि० तिथौ मम सकलेष्टसिद्ध्यर्थं मंडपप्रवेशांगभूतं द्वारशाखाधिष्ठातृदेवतानां पूजनमहं करिष्ये ॥ तद्यथा ॥ देहल्यग्रतः कुंकुमादिना त्रिकोणं तदुपरि वृत्तं तदुपरि चतुरस्रं मंडलं कृत्वा ॥ तत्र असुरान्तकचक्राय नमः॥ इति मंत्रेण प्रक्षालितं ताम्रादिपात्रं स्थापयित्वा कृष्णाय नमः हृदयाय नमः इति जलं पूरयेत्॥तत्र गंगे च यमुने चैव गोदावरि सरस्वति॥नर्मदे सिंधुकावेरी जलेऽस्मिन्सान्निधिं कुरु ॥ इति मंत्रेणांकुशमुद्रया तीर्थान्यावाह्य पुष्पाणि निक्षिपेत् ॥ असुरान्तकचक्राय नमः ॥ इति द्वारमभ्युक्ष्य ॥ हस्ते अक्षतान् गृहीत्वा ॥ ऊर्ध्वं द्वारश्रियै नमः॥द्वारपीठस्य मध्ये देहल्यां वास्तुपुरुषाय नमः ॥ दक्षिणशाखायां गंगायै नमः ॥ वामशाखाया यमुनायै नमः ॥ दक्षिणे शंखनिधये नमः ॥ वामे पद्मनिधये नमः ॥ द्वारस्य चतुष्कोणेषु आग्नेय्याद्युर्ध्वोधः क्रमे ॥ आग्नेयां गणपतये नमः ॥ नैर्ऋत्यां दुर्गायै नमः ॥ वायव्यां सरस्वत्यै नमः ॥ ऐशान्यां क्षेत्रपालाय नमः ॥ द्वारश्रियाद्यावाहितदेवेभ्यो नमः ॥ सक्षीरजलेन स्नानं समर्पयामि ॥ द्वारश्रियाद्या०गंधं० ॥ द्वारश्रियाद्या० पुष्पं० ॥ द्वारश्रियाद्या० धूपं०॥ द्वारश्रियाद्या० दीपं०॥ द्वारश्रियाद्या नैवेद्यं० ॥ द्वारश्रियाद्यावाहितदेवेभ्यो नमः सर्वोपचा-

इह तिष्ठ ब्रह्मणे नमः ब्रह्माणं आ० ॥ अधोमेखलायां कृष्णवर्णालंकृताया ॥ गंगाधर महादेव वृषारूढ महेश्वर ॥ आगच्छ भगवन् रुद्र कुण्डेस्मिन्संन्निधो भव॥रुद्र इहा गच्छ इह तिष्ठ ॥ रुद्राय नमः रुद्रमा० ॥३॥योन्यां ॥ सेवंते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुरशीतिलक्षणां पन्नगाद्याः सरीसृपाः ॥ १ ॥ मनोभवयुता देवी रतिसौख्यप्रदायिनी ॥ मोहयन्ति सुरान् सर्वान् जगद्धात्रि नमोऽस्तुते ॥ गौरीहागच्छ इह ति० गौर्यै० ॥ जीवनं सर्व जन्तूनां सृगादिस्थानमुत्तमम् ॥ उत्तमाङ्गसुचाधारं कण्ठमावाहयाम्यहम् ॥ कण्ठ इहागच्छ इह ति० कण्ठाय० ॥ पद्माकाराथवाकुण्डे सदृशाकृतिसंयुता ॥ आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ॥ नाभिं इहागच्छ ॥ इह तिष्ठ ॥ नाभ्यै० ॥ नैर्ऋते ॥ अज्ञानातज्ञानतो वापि दोषाः स्युः खननोद्भवाः ॥ नाशय

—दिद्रव्याणि स्रुवेण समिधो मूलतोद्वयंगुलं विहाय मध्यमानामिकांगुष्ठै र्जुहुयात् ॥ चरुं ग्राससमं पाणिनैव जुहुयात् ॥ आज्यं स्रुवेणैव ॥ स्रुवाभावे यज्ञीयवृक्षपर्णेन ॥ सिद्धांतशेखरे ॥ कर्षप्रमाणमाज्यं स्यात् मधु क्षीरं च तत्समं ॥ तण्डुलानां शुक्तिमात्रं पायसं प्रसृतिसमं ॥ कर्षमात्राणि ॥ भक्ष्याणि लाजामुष्टिमिता मताः ॥ अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकं ॥ मूलानान्तु त्रिभागं स्यात्कंदानामष्टमांसकः ॥ इक्षोः पर्वप्रमाणं स्यादंगुलद्वितयं लता ॥ प्रादेशमात्राः समिधो व्रीहीणामंजले समा ॥ तिलसक्तुकणादीनां मृगिमुद्राप्रमाणतः ॥ पत्रपुष्पफलादीनां प्रधानाइतिकथ्यते ॥

अहितान् सर्वान् विश्वकर्मन्नमोऽस्तु ते॥विश्वकर्मन्निहागच्छ इह तिष्ठ विश्वकर्मणे० विश्वकर्माणमा० कुण्डनैर्ऋते ॥ आवाहयामि देवेशं वास्तुदेवं महाबलम् ॥ देवदेव गणाध्यक्ष पातालतलवासिनम् ॥ वास्तुपुरुष इहागच्छ इह तिष्ठ वास्तुपुरुषाय नमः वास्तुपुरुषमा० ॥ प्रतिष्ठा सर्वदेवानां० विष्णवाद्यावाहितदेवाः सुप्रतिष्ठिताः वरदा भवन्तु ॥ विष्णवाद्यावाहितदेवेभ्यो नमः गंधं स० । विष्णवाद्यावा० पुष्पं स० । विष्णवाद्या० धूपं० स० ।

—श्रीखंडकेशरकस्तूरी कुंकमागरुकर्दमाः ॥ हरिमन्थाः समं मोक्ताः गुग्गुलोवदरीसमाः ॥ आहुतीनामिदं मान कथितं वेदवादिभिः ॥ तिसृभिर्दूर्वाभिरेकाहुतिः ॥ कुशेषु त्रिपत्रेणैकेति ॥ ( १ ) भास्करे मूलधृतैः ईशानीमारभ्य भ्रमितैः मतीचिमारभ्य माग् संस्थनिः सारितैः त्रिभिर्दर्भैः त्रिः परिसमुह्य ॥ १ ॥ गोमयेन३०उल्लेखनं मागंत त्रिरूर्ध्वरेपाकरणं याम्यतः उदक्संस्थामादेशपरिमिता ॥२॥ उल्लिखितपांशूना मृदं ऊर्ध्वं प्रक्षिप्य ॥३ ॥ न्युब्जपाणिना ॥ सन्मुख मणयेदग्निं निर्धूमं कुंडमध्यमः ॥ साक्षतं वन्हिपात्रे च सुवासिन्यै समर्पयेत् ॥ ४ ॥

---

—जेटलो करवो. तेमज मूळोना त्रणभागकरी त्रिजेभागे आपवो. तेमज कदोनो आठमोभाग आपवो, सेरडीनो भाग एकपर्व जेटलो आपवो, लताओनो भाग बेअगुळ जेटलो आपवो, समीदो एक प्रादेश जेटली करी आपवी तथा भात खोबोभरी आपवो तथा तल साथनो कण वीगेरे मृगीमुद्रावडे आपवा तथा फूल पत्र अने फळ एनी समान—

विष्णवाद्या० दीपं स० । विष्णवाद्यावाहित० नैवेद्यं स० । शेषोपचारा यथेच्छया कर्तव्याः ॥ यजमानः जलं
गृहीत्वा अद्येत्यादि० तिथौ असुकवासरे अस्मिन्कर्मणि ब्राह्मणद्वारा पंचभूसंस्कारपूर्वकअग्निप्रतिष्ठां करिष्ये ॥
आचार्यो जलं गृहीत्वा ॥ मम यजमानानुज्ञया पंचभूसंस्कारपूर्वकं अग्निप्रतिष्ठां करिष्ये ॥ तत्र त्रिभिर्द-
र्भैः परिसमुह्य॥परिसमुह्य॥परिसमुह्य ॥ गोमयेन उपलिप्य ॥ उपलिप्य॥उपलिप्य॥कुशमूलेन उल्लिख्य ॥ उल्लिख्य॥
उल्लिख्य ॥ अनामिकांगुष्ठेन उद्धृत्य ॥ उद्धृत्य उद्धृत्य ॥ उदकेन अभ्युक्ष्य ॥ अभ्युक्ष्य॥ अभ्युक्ष्य॥ कांस्येन वा
शरावेण सुवासिन्यग्निमानयेत् ॥ आनीतमग्निं स्थंडिलस्याग्नेय्यां निधाय ॥ हुं फट् इति मन्त्रेण क्रव्यादांशं नै-
र्ऋत्यां दिशि परित्यज्य ॥ त्रिवारमग्निं स्थंडिलोपरि भ्रामयित्वा ॥ आत्माभिमुखं अग्निं संस्थाप्य ॥ अग्न्यानी-

( १ ) ॥ धर्मसिंधौ ॥ अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥ पावमानः पुंसवने सीमंते मंगलाभिधः ॥ प्रबलो जातसंस्कारे पार्थिवो

—आहुति आपवी, श्रीखंड, केशर, कस्तुरी, कुंकुम, अगर, कर्दमएटली वस्तुनो होम पणा जेटली लइने करवो. तथा, गुगलनो होम करवो ते बोरना जेटलो लेवो. तथा त्रण दुर्वाथी एक आहुति थायछे तेमज श्रीश्लाखा लई दर्भनो होम करवो ॥ ( १ ) ब्राह्मणे सकल्प करवोके यजमाननी आज्ञाथी अग्निस्थापन करूछउ दर्भे परिसमुह्य इत्यादि करी यजमानपत्नीने तांबाना नेपात्र, वा कासाना वा मटोडाना पात्रमां साधीओ काढी नोतरा नाखी आपवा ते थाळी नूतन जोईए भोजन करेली पण न जोईए तांबानु पात्र पण चालीशकेछे. तेणे घरमां जई एकपात्रमां देवता लइ बीजु पात्र उपरढाकी,

तपात्रे साक्षतोदकं निषिच्य ॥ अग्निमुखं कृत्वा ध्यायेत॥सप्तहस्तश्चतुःशृंगः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ १ ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ॥ बिभ्रद्दक्षिणहस्तेस्तु

नाम कर्मणि ॥ अन्नासने शुचिः प्रोक्तो सभ्यः स्याचौलकर्मणि ॥ व्रतादेशे समुद्भवो गोदानादौ सूर्यः ॥ विवाहे योजकः ॥ प्रायश्चित्ते विट् ॥ शांतिके वरदः पौष्टिके बलवर्धनः ॥ मृतदाहे क्रव्यादः ॥ पूर्णाहुत्यां मृडः ॥ कात्यायनः ॥ न नखेन न काष्ठेन नाश्मना मृन्मयेन वा ॥ प्रोक्षिवेल्लक्षणं विघ्नसिद्धिकामस्तु यो भवेत् ॥ नखेन कुनखी चैव काष्ठेन व्याधिपीडाति ॥ अश्मना धननाशः स्यात्फलाल्पः मृन्मये न च ॥ फलेन फलमाप्नोति पुष्पेन श्रीयमिच्छति ॥ पर्णेन धनलाभः स्यात् दीर्घमायुःकुशेन तु ॥ तस्मात्फलेन पुष्पेण पर्णेनाथ कुशेन वा ॥ प्रोक्षिवेल्लक्षणे विघ्नसिद्धिकामस्तु कर्मसु ॥ दर्भाः कृष्णाजिनं मंत्राः ब्राह्मणा हविरग्नयः ॥ अयातयामान्येतानि नियोज्यानि पुनःपुनः ॥ चितौ दर्भाः पथिदर्भाः ये दर्भाः यज्ञभूमिषु ॥ स्तरणासनपिंडेषु षट्कुशान् परिवर्जयेत् ॥ ब्रह्मयज्ञेषु ये दर्भाः ये दर्भा पितृतर्पणे ॥ हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥ इति छंदोगपरिशिष्टे ॥

---

--कोइ अग्विज्ञने स्पर्श न करता पूजानी ठेकाणे आवी नीचे पात्र मूकवुं.केटलाक ब्राह्मणो ते यजमानपत्नीना हाथमांथी अग्नि पासे लेछे, ते प्रायश्चित्ति पापछे. माटे तेम न लेतां नीचे मूकावी ते पात्र ब्राह्मणे लइ पोताना समुख करी अग्निस्थंडिलमां (अथवा कुंडमां) मूकवो. पछी ते पात्रमां कंकु चोखा तथा द्रव्य नाखी यजमानपत्नीने आपवुं.

शक्तिमन्नं स्रुचं स्रुवम् ॥ २ ॥ तोमरं व्यंजनं वामे घृतपात्रं च धारयन् ॥ आत्माभिमुखमासीन एवं रूपो हुताशनः ॥ ३ ॥ अग्ने वैश्वानर शांडिल्यगोत्र शांडिल्यासितदेवलेति त्रिः प्रवरान्वितभूमिर्माता वरुणः पिता मेशध्वज प्राङ्मुख मम संमुखो भव ॥ शान्तौ वरदनामाग्निं प्रतिष्ठाप्य ॥ अग्निपुरुषाय नमः इति मंत्रेण वायव्यकोणे पूजयेत् अग्नये नमः गंधं० पुष्पं० धूपं० दीपं० नैवेद्यं समर्पयामि ॥ अग्निं शक्त्या संपूज्य ॥ प्रार्थयेत् ॥ अग्निं प्रज्वलितं वंदे जातवेदं हुताशनम् ॥ हिरण्यवर्णमनलं समृद्धं विश्वतोमुखं ॥ प्रार्थनापूर्वकं नमस्कारं समर्पयामि ॥ **अथ ग्रहस्थापनम्** ॥ तत्र पूर्वं कुण्डमंडपे ग्रंथोक्तप्रकारेण ग्रहपीठं कृत्वा ॥ अथवा काष्ठमयपीठे श्वेतवस्त्रं प्रसार्य तदुपरि पंचवर्णैः वा शुभ्राक्षतैः नवग्रहमंडलानि कृत्वा ॥ तेषां लक्षणादीनि ॥ अथप्रयोगः ॥

॥ (१) स्कांदे ॥ जन्मभू गोत्रमग्निश्चवर्णस्थानमुखानिच ॥ यो ज्ञात्वाकुरुते शांतिं ग्रहास्तेनावमानिताः ॥ १ ॥ व्रतमंडलमादित्ये चतुरस्रं निशाकरे ॥ महीपुत्रे त्रिकोणंतु बुधेवै बाणसंनिभम ॥ २ ॥ गुरौतुपद्दिशाकारंपंचकोणं तु भार्गवे ॥ धनुषाकृतिर्मंदे च शूर्पाकारंतु राहवे ॥ ३ ॥

---

अर्थ-( १ ) अग्नि स्थापन थया पछी अग्निना मंत्रोथी आवाहन करी- " शांतिओमां" वरद नामना अग्निनुं पूजन करी प्रार्थना करवी ( १ ) हवे नवग्रहोनुं स्थापनकरवुं तेमांइशान्यमां बाजठपर अथवा शास्त्रोक्त पीठपर सफेत ककडो पाथरी तेना उपर नवग्रहोना मंडलोकाढवा—तेनालक्षणनो पट

केतवे तु ध्वजाकारं मंडलानि प्रकल्पयेत् ॥ मध्येतु भास्करंविद्याच्छशिनं पूर्वदक्षिणे ॥ दक्षिणे लोहितं विंद्याद् बुधंपूर्वोत्तरेऽपिच ॥ उत्तरेतु गुरुंविंद्यात् भार्गवं पूर्वतो न्यसेत् ॥ शनिं पश्चिमतःस्थाप्य नैर्ऋते राहुमेवच ॥ केतु वायव्यकोणे च ग्रहस्थानानि कल्पयेत् ॥ प्रतिष्ठा कल्पे ॥ शुक्रार्कौ प्राङ्मुखौज्ञेयौ गुरुसौम्यौ उदङ्मुखौ ॥ प्रत्यङ्मुखौ सोमशनी शेषा दक्षिणतोमुखाः ॥ एताह्युदङ्मुखाखेटाः स्वस्व लोकेनिवासिनः ॥ यजमानात्माभिमुखाः सर्वे संस्थापयंति च ॥ पूज्य पूजकयो र्मध्ये यत्र प्राचीं प्रकल्पयेत् ॥ तत्र संन्मुखसंस्थाप्या इति न्यायो यथा तथमिति ॥ मदनरत्नसंग्रहे ॥ ग्रहस्य दक्षिणेभागे स्थापयेदधिदेवताः ॥ ग्रहस्य वामपार्श्वे तु स्थाप्याः प्रत्यधिदेवताः ॥ ईश्वरं च उमां चैव स्कंदं विष्णुं तथैवच ॥ ब्रह्माण मिंद्रं तु यमं कालं चैव तु अष्टमं ॥ चित्रगुप्तं तु नवमं किर्तिता अधिदेवताः ॥ अग्नि श्चैव तथा आपः पृथिवी विष्णु रेव च ॥ इंद्रश्चैव तथेन्द्राणि प्रजापति स्तथैवच ॥ सर्पश्चैव तु ब्रह्मा च एताः प्रत्यधि देवताः ॥ राहुमंददिनेशाना मुत्तरस्यां यथा क्रमं ॥ गणेश दुर्गा वायुश्च राहुकेत्वोश्चदक्षिणे ॥ आकाश मश्विनौदेवौ स्थापयित्वा क्रमेणतु ॥वास्तोष्पति क्षेत्रपालौ स्थाप्यौ गुर्वोत्तरेषु च ॥एताः सदैव संस्थाप्याः कर्मे साद्गुण्यदेवताः ॥ इंद्राग्नि यमनैर्ऋत्य वरुणो वायुरेव च ॥ कुबेरैशानावित्यष्टौ प्रगादि प्रदिशाधिपाः॥ ब्रह्माणं च ततस्थाप्य पूर्वेशान्यो स्तुमध्यमे ॥ प्रतीचि नैर्ऋतिमध्ये अनंतं स्थापयेदिति॥आवाहनं तु प्रतिमाक्षतपुंजादि स्थापितं संस्पृश्य कर्तव्यमितिभास्करे॥ संग्रहे ॥ तिलाज्य चरुभिद्रव्यं समिधां च यथातथं॥ग्रहाहीनां च सर्वेषां हविर्द्रव्य मुदीरितं ॥ अर्कः पलाश खदिरा वपामार्गोथ पिप्पलः ॥ औदुंबरः शमी दूर्वा कुशाश्च समिधादिति ॥ हेमाद्रौ भविष्ये च ॥

---

–मुकेलोछे ते प्रमाणेकाढी अधिप्रत्यधि देवता विगेरे सहित ग्रहना सोपारी गोठववां ॥–जो शक्तिहोयतो दरेक ग्रहोनी मूर्तीओ करावनी तेनापर आवाहनकरी

आदित्यादिग्रहाणा हस्ते जलं गृहीत्वा ॥ अद्येत्यादि० ॥ अमुकवासरे संकल्पोक्तकर्मणः सांगतासिध्यर्थं आदित्यादिग्रहाणा
सपरिवाराणां स्थापनप्रतिष्ठापूजनं करिष्ये ॥ हस्ते अक्षतान् गृहीत्वा ॥ उक्तमंडले अक्षतपुंजेषु पूगीफलानि
निधाय देवानावाहयेत् ॥ हस्ते अक्षतान् गृहीत्वा ॥ सूर्यं ॥ कलिंगदेशेश्वर जपापुष्पोपमांगद्युते ॥ तेजोनिधे
त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते संनद्धो माणिक्याभरणभूषितारुण ध्वजपताकोपशोभितेन ससाश्वरथ-
वाहनेनागच्छ पद्मकर्णिकायां ताम्रमयीं प्रतिमां प्राङ्मुखीं वर्तुलपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ १ ॥
चंद्रं ॥ भगवन् सोमद्विजाधिपति सुधामयशरीरात्रिगोत्र यमुनादेशेश्वर गोक्षीरधवलांगकान्तेय द्विभुजगदा-
वरदांकितकरशुक्लांबरमाल्यानुलेपन सर्वांगमुक्तमौक्तिकाभरण रमणीय समस्तलोकाध्यायिकदेवतास्वाध्यायि

---

संकल्पभणवो.तेमां सपरिवार ग्रहोनुं स्थापन स्थापन करवु. हवे ग्रहो केवाठे तेनुं वर्णन ध्यानमां लइ सौ सौना स्थानपर मंत्र युक्त बेसाडवापछीहाथमांजललइ संकल्पभणवो.तेमां सपरिवार ग्रहोनुं स्थापन
करीश एमकेवाथी बधा आवेछे.— तेमकरीलाल चोखालइ सूर्यनु ध्यान करी वचमा तांबाना कल्शपर तरमाणीपरताचानीमूर्तीपर मंत्रो उपरप्रमाणे भणायापछी
स्थापन करवुं एमसूर्यनुं वर्तुल पीठे वचमां स्थापन करी बीजाग्रहोनुं स्थापन जेतेनाठेकाणापर उपर प्रमाणे स्थापन करवुं जोदरेक ग्रहोनीप्रतिमा ते ते न थायतो
मूर्तियो सुवर्णनी करावनी. अथवा रुपानी करावनी; एमपण थायछे. एप्रमाणे ग्रहोनुं स्थापन विधीथी करावनुं.

नमस्ते सन्नद्ध श्वेतध्वजरथपताकोपशोभितेन दशश्वेताश्ववाहनेना गच्छात्र पद्माग्नेयदले स्फाटिकप्रतिमां प्रत्यङ्मुखीं चतुरस्रपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ २ ॥ भौमं ॥ भगवन् अंगारकाज्ञाकृते भारद्वाजगोत्रावंतिदेशेश्वर ज्वालापुंजोपमांगद्युते चतुर्भुज शक्तिशूलगदाखट्वांगधारीन् रक्तम्बरमाल्यानुलेपन प्रवालाभरणभूषित सर्वांगदुरालोकदिसे नमस्ते ॥ सन्नद्ध रक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेनागच्छ पद्मदक्षिणदले चंदनप्रतिमां दक्षिणमुखीं त्रिकोणपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ ३ ॥ बुधं ॥ भगवन् सौम्य सौम्याकृते सर्वज्ञानमयात्रिगोत्र मगधदेशेश्वर कुंकुमवर्णांगद्युते चतुर्भुजखड्गखेटकगदांकित पीताम्बरमाल्यानुलेपन नीलरत्नाभरणालंकृत सर्वांग विबुधपते नमस्ते ॥ सन्नद्धपीतध्वजपताकोपशोभितेन चतुःसिंहरथवाहनेनागच्छ ॥ पद्मेशानदले सुवर्णप्रतिमाउदङ्मुखीं बाणाकारपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ ४ ॥ गुरुं ॥ भगवन् बृहस्पते समस्तदेवताचार्यांगिरसगोत्र सिंधुदेशेश्वर दीर्घसुवर्णसदृशांगद्युते चतुर्भुजदंडकमंडलुअक्षसूत्रवरदांकित-पीताम्बरमाल्यानुलेपन पुष्परागमयाभरणरमणीयसमस्तविद्याधिपते नमस्ते सन्नद्धपीतध्वजपताकोपशोभितेन पीताश्वरथवाहनेनागच्छ ॥ पद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं दीर्घचतुरस्र पीठेऽधितिष्ठ ॥ पूजार्थं त्वा-

मावाहयामि ॥ ५ ॥ शुक्रं ॥ भगवन् भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रक्तोज्वलांगकांते चतुर्भुज दंडकमंडल्वक्षसूत्रवरदांकित करशुक्लाम्बरमाल्यानुलेपन शुक्लाभरणभूषित सर्वांगसमस्तनितिशास्त्रपुराणमते नमस्ते ॥ सन्नद्धशुक्लध्वजपताकोपशोभितेन शुक्लाश्वरथेनागच्छ पूर्वदलमध्ये रजतप्रतिमां प्राङ्मुखीं पंचकोणपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ ६ ॥ शनैश्चरं ॥ भगवन् शनैश्चर भास्करतनय काश्यपगोत्र सौराष्ट्रदेशेश्वर कज्जलाभकांते चतुर्भुजचापतुणीरकृपयाऽभयांकित करनीलाम्बरमालानुलेपन नीलरत्नभूषणालंकृत समस्तभुवनभिषणाभिमर्पमूर्ते नमस्ते ॥ सन्नद्धनीलध्वजपताकोपशोभितेन नीलगृध्र रथवाहनेनागच्छ ॥ पद्मपश्चिमदले लोहमयीं प्रतिमां प्रत्यंगधनुपाकारपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥७॥ राहुं ॥ भगवन् राहो रविसोममर्दन सिंहिकानंदन पैठिनसगोत्र बर्बरदेशेश्वर कालमेघद्यूते व्याघ्रवदन चतुर्भुजखङ्गचर्मशूलवरदांकित कृष्णांबरमालानुलेपन गोमेदकाभरणभूषित सर्वांगशौर्यनिधे नमस्ते ॥ सन्नद्धकृष्णध्वजपताकोपशोभिते कृष्णसिंहरथवाहनेनागच्छ ॥ पद्मनैर्ऋतिदले सिसमयिप्रतिमां दक्षिणमुखीं शूर्पाकारपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ ८ ॥ केतुं ॥ भगवन् केतो कामरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्ण ध्वजाकृते द्विभुजगदावरदानांकितकर-

चित्राम्बरमाल्यानुलेपन वैडुर्यमयाभरणभूषित सर्वांगचित्रशक्ते नमस्ते ॥ सन्नद्धचित्रध्वजपताकोपशोभितेन चित्रकपोतरथवाहनेनागच्छ ॥ पद्मवायव्यदले कांस्यप्रतिमां दक्षिणाभिमुखीं ध्वजाकारपीठेऽधितिष्ठ ॥ पूजार्थं त्वामावाहयामि ॥ इति ग्रहाणां स्थापनं ॥ अथाधिदेवताः ॥ सूर्यस्य दक्षिणे शंभुं ॥ भगवंतं पंचवक्त्रं त्रिलोचनं वृषारूढं कपालशूलखट्वांगाधिधारिणं चंद्रमौलिं आदित्याधिदेवेशं शंभु मावाहयामि ॥१॥ चंद्रस्य दक्षिणे उमां ॥ भगवतीमक्षसूत्रदर्पणकमलकमंडलुधारिणीं नानाभरणभूषितां त्रिदशपूजितां सोमाधिदैवतामुमा मावाहयामि ॥२॥ भौमस्य दक्षिणे॥ स्कंदं॥भगवंतं षण्मुखं शिखंडकविभूषणं रक्ताम्बरधरं मयूरवाहनं कुक्कुटघंटापताकाशक्त्युपेतं चतुर्भुजं अंगारकाधिदेवं स्कंद मावाहयामि ॥ ३ ॥ बुधस्य दक्षिणे विष्णुं ॥ भगवंतं चतुर्भुजं कौस्तुभादिनानाभरणभूषितं पीताम्बरधरं कौमोदकीपद्मशंखचक्रोपेतं बुधादिदेवं विष्णुमा० ॥ ४ ॥ गुरोः दक्षिणे ब्रह्माणं ॥ भगवंतं ब्रह्माणं पद्मासनस्थं जटिलचतुर्मुखमक्षमालास्रुवं पुस्तककमंडलुधारिणं कृष्णाजिनवाससं

---

(१) नवेग्रहोनुं स्थापन थया पछी अधिदेवताओनुं स्थापन ग्रहोना दक्षिणभागे करवुं. ते दरेकना कळश गोठवी तरभाणी मूकी ग्रहो प्रमाणे मूर्ति मूकी यथोक्त करवुं.

भुजां सिंहारूढां दुर्गाख्यदैत्यान् संहारिणीं दुर्गामावाहयामि ॥ २ ॥ सूर्यस्य उत्तरे वायुं ॥ श्यामवर्णं हेमदण्डधरं
कृष्णमृगवाहनं जगत्प्राणरूपं मोहिनीप्रियं वायु मावाहयामि ॥ ३ ॥ राहोर्दक्षिणे आकाशं ॥ भगवंतं चंद्रार्कोपेतं
द्विभुजं पण्द्माकाशमावाहयामि ॥ ४ ॥ केतो र्दक्षिणे अश्विनौ ॥ नीलोत्पलाभौ नीलांबरधारिणौ प्रत्येकमौषधि-
पुस्तकोपेतौ दक्षिणपार्श्वे परस्परवामपार्श्वे रत्नभांडाकरशुक्लांबरधारी नारीयुग्मोपेतौ देवभिषजावश्विनावावाह-
यामि ॥ इति लोकपालाः ॥"वास्तोष्पतिं" ॥ उत्तरे भगवंतं देवेशं महाबलं देवदेवं गणाध्यक्षं पातालतलवासिनं
वास्तुदेव मावाहयामि ॥ १ ॥ मंडलस्योत्तरे ॥ क्षेत्रपालं ॥ भगवंतं देवेशं दिव्यरूपं महाकायं नानाभरणभूषितं
संहारमूर्तिं शिरसि धृतजटाशेखरं चंद्रबिंबं कृतनरवपुषं करालं पापनाशं क्षेत्रपाल मावाहयामि ॥ **अथ दि-**
**क्पालाः** ॥ पूर्वे इंद्रं ॥ स्वर्णवर्णसहस्राक्षं वज्रपाणिं शचिप्रिय मिंद्रमावाहयामि ॥ १ ॥ आग्नेयां अग्निं ॥ सप्ताः

३६ ( १ ) मंगलोत्तरे क्षेत्रपाल स्थापन मिति ॥ शांति कमलाकरे इति क्रतु साद्गुण्य देवताः ॥

अर्थ–हवे गणपत्यादि साद्गुण्यदेवताओनुं स्थापन करवुं ते राहु, शनि, अने सूर्य, तेनी उत्तरदिशामां करवुं. वास्तोष्पति अने क्षेत्रपालनुं स्थापन मंडलना उत्तरमां करवुं. ( १ ) इन्द्रादिदशदिक्पालनुं स्थापन पूर्वादि दिशाओमां करवुं तेमां ब्रह्मानुं " पूर्वेशानमध्ये " तथा अनंतनुं पश्चिम निर्ऋतिमध्ये करवुं. आवाहन करवुं, ते दरेक ग्रहोनी मूर्तीओने स्पर्श करी करवुं.

र्चिषं ससहस्तं स्रुकस्रुवशक्ति मूत्रतोमरव्यंजनघृतपात्राणि दधानं स्वाहाप्रियं मेषवाहन मग्नि मावाहयामि ॥२॥ दक्षिणे यमं ॥ रक्तवर्णं दंडधरं महिषवाहनमाभिप्रियं यममावाहयामि ॥ नैर्ऋत्यां निर्ऋतिं ॥ नीलवर्णं खड्ग चर्मधरमूर्ध्वकेशं नरवाहनं कालिकाप्रियं नैर्ऋति मावाहयामि ॥ ४ ॥ पश्चिमे वरुणं ॥ रक्तभूषणं नागपाशधरं मकरवाहनं पद्मिनीप्रियं वरुण मावाहयामि ॥ ५ ॥ वायव्यां वायुं ॥ श्यामवर्णं हेमदण्डधरं कृष्णमृगवाहनं जगत्प्राणिरूपं मोहिनीप्रियं वायु मावाहयामि ॥ ६ ॥ उत्तरे सोमं ॥ स्वर्णवर्णानिधीश्वरं गदापाणिमश्ववाहनं चित्रिणिप्रियं सोम मावाहयामि ॥ ७ ॥ ईशान्यां ईशानं ॥ शुद्धस्फटिकवरदाभयशूलाक्षसूत्रधरं वृषभवाहनं गौरीप्रियं ईशान मावाहयामि ॥८॥ पूर्वेशानयोर्मध्ये ब्रह्माणं ॥ भगवंतं पद्मासनस्थं जटिलं चतुर्मुखं अक्षमालास्रुवपुस्तककमंडलुधारिणं कृष्णाजिनवाससं स्वराप्रियं ब्रह्माणमावाहयामि ॥ ९ ॥ निर्ऋति वरुणयोर्मध्ये ॥ अक्षसूत्रधरं कुंडलिकागुच्छयुक्तं सहस्रभोगं शुभ्रवर्णमनंत मावाहयामि ॥ १० ॥ ईशान्यां ॥ विधियुक्तमंत्रैः कलशोपरि रुद्रं ॥ भगवंतं गिरिजाप्रियं नंदीशं डमरु त्रिशूल खट्वांगाभयधारिणं

(१) इति क्रतुसंरक्षक देवताः ॥ अयं रुद्रकलशो यजमानस्य स्नानार्थ मिति कमलाकरैः ॥ रुद्रकलशोपरि हस्तं दत्वा सांगं रुद्रं जपेत् ॥

त्रिदशसेवितं रुद्र मावाहयामि ॥ ११ ॥ एवं ग्रहवेद्यां देवान्संस्थाप्य ॥ हस्ते अक्षतान् गृहीत्वा ॥ प्रतिष्ठा कार्या ॥ प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां वः करोम्यत्र मंडले दैवतैः सह ॥ आदित्याद्यावाहितदेवाः सुप्रतिष्ठिताः वरदाः भवत ॥ प्रतिष्ठांते पूजनं ॥ आदित्याद्यावाहितदेवेभ्योनमः ॥ आसनं समर्पयामि ॥ २ ॥ एवं सर्वत्र ॥ आदित्याद्यावाहितदेवेभ्योनमः ॥ पादयोः पाद्यं समर्पयामि ॥ ३ ॥

(१) कलशस्थापनोक्तमंत्रैः कलशस्थापनं ॥ तेषामुपरि कृताग्न्युच्चारणपूर्विकां सूर्यादीनां प्रतिमाः स्थापयेयुः ॥ पूजनन्तु अष्टादशोपचारैः कर्तव्यं ॥ आवाहनासनं पाद्य मर्घ माचमनीयकं स्नानं वस्त्रोपवीतं च गंधमाल्यान्यनुक्रमात् ॥ धूपं दीपं च नैवेद्यं तांबूलं च प्रदक्षिणां ॥ पुष्पांजलि रितिप्रोक्ता उपचारास्तु षोडश इति ॥

---

अर्थ-(१) रुद्रकलशनु स्थापन ग्रहना इशानमा करवु तेमा कलशमा जल विगेरे यथोक्त भरी ईशानमा मुकवो तेनापर रुद्रनुं स्थापन करवु. ग्रहोनी साथे पूजा करी तेना पर हाथ अडकाडी एक ब्राह्मणपासे रुद्र जप कराववो. उपर लख्याप्रमाणे ग्रहोनु स्थापन थया पछी चोखालइ प्रतिष्ठानो मन्त्रभणी दरेकना उपर वधाववा तथा पूजा करवी तेमा एक पूजापण नियमित उपचार वडे थती नथी तेथी योग्यफळ मलतु नथी माटे षोडशोपचार अथवा अष्टादशोपचार, षट्त्रिंशोपचार, चतुष्षट्त्रिंशोपचार, राजोपचार वीगेरे घणाउपचारो छे. तेमाथी बने ते उपचार ग्रहण करीने पूजा करवी ए योग्य छे. माटे एक निश्चय करी पूजा करवी. केटलाक उपचारोमा दक्षणा नथी ते त्या मूकवी नहि पण पूजनना अन्ते मूकवी. कारणके दक्षिणा सफलार्थ छे मध्यमा मुकवाथी विधि नष्ट थायछे

आदित्या० अर्घ्यंस० ॥ ४ ॥ आदित्या० आचमनीयं स० ॥ आदित्या० स्नानंस० ॥ ६ ॥ आदित्या० वस्त्रं स० ॥ ७ ॥ आदित्या० यज्ञोपवीतं स० ॥ ८ ॥ आदित्या० आभूषणानि स० ॥ ९ ॥ आदित्या० गंधं स० ॥ १० ॥ आदित्याद्यावाहितदेवेभ्यो० अलंकारार्थेअक्षतान्स० ॥ आदित्या० पुष्पाणि स० ॥ ११ ॥ आदित्या० सुशोभनार्थे सौभाग्यद्रव्याणि स० ॥ आदित्या० धूपं स० ॥ ११ ॥ आदित्या० दीपं स० ॥ १२ ॥ आदित्या० नैवेद्यं स० ॥ १३ ॥ आदित्याद्या० तांबूलं स० ॥ १४ ॥ आदित्या० अंजुलेपनं स० ॥ १५ ॥ आदित्या० नमस्कारं स० ॥ १६ ॥ आदित्याद्या० साद्गुण्यार्थे दक्षिणां समर्पयामि ॥ प्रार्थनापूर्वकनमस्कारं कुर्यात. ॥ जपा कुसुमसंकाशं काश्यपेयं महद्द्युतिं ॥ तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरं ॥ १ ॥ दधिशंखतुशाराभं क्षीरो-

(१) चंदनेन मुखनासिके लिंपंतीति गदाधरः ॥ सर्वशरीरोद्वर्तनं कार्य मिति हरिहरः ॥ (२) अन्वाधानं ॥ प्रयोगरत्ने स्मार्तोल्लास स्मार्तगंगाधर्यादिभिः उक्तः ॥ प्रचुरतरशिष्टाचार प्राप्तत्वात्चात्राप्युच्यते ॥ जलं गृहीत्वा अस्मिन्गृहयज्ञाख्ये कर्मणि देवतापरिग्रहणार्थमन्वाधानं करिष्ये ॥ अस्मिन्नन्वाहिते ऽग्नौ पूर्वेण ब्रह्मणोगमनं ॥ उत्तरतः पात्रासादनं ॥ द्वे पवित्रे कांस्यमयी ताम्रमयी वा आज्यस्थाली ॥ ताम्रमयी चरूस्थाली पलाश्यः समिधः ॥ प्राच्यां वा घारौ समिद्वतमे आज्यभागौ पूर्णपात्रं ॥ दक्षिणा

दार्णवसंभवं ॥ नमामि शशिनं सोमं शंभोर्मुकुटभूषणं ॥ २ ॥ धरणीगर्भसंभूतं विद्युत्कांतिसमप्रभम् ॥ कुमारं शक्तिहस्तं च मंगलं प्रणमाम्यहं ॥ ३ ॥ प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधं ॥ सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहं ॥ ४ ॥ देवानां च ऋषीणां च गुरुकांचनसन्निभम् ॥ बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिं ॥ ५ ॥ हेमकुंद मृणालाभं दैत्यानां परमं गुरुम् ॥ सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहं ॥ ६ ॥ नीलांजनसमाभासं रविपुत्रं यमाग्रजं ॥ छायामार्तंडसंभूतं तं नमामि शनैश्चरम् ॥ ७ ॥ अर्धकायं महावीर्यं चंद्रादित्यविमर्दनम् ॥ सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहं ॥ ८ ॥ पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् ॥ रौद्रं

—चा ॥ एतान्वैकल्पिका न्पदार्थानहं करिष्ये ॥ अथ देवताभिध्यानं ॥ तत्र प्रजापति मिन्द्रमग्निं सोममेताः आज्येन प्रत्येक मेकैकया हुत्वा ॥ अत्र प्रधानं ॥ आदित्यादि नवग्रहा नर्कादि यथालाभ समिधचरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येण अष्टाष्टसंख्याकाभिराहुतिभिः ॥ अधिदेवता प्रत्यधिदेवताश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्येण चतु श्चतुः संख्याकाभिराहुतिभिः विनायकादि पंचदेवताः वास्तोष्पतिं क्षेत्रपालं इंद्रादिदशदिक्पालांश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्येण द्वाभ्यां द्वाभ्या माहुतिभ्यां यक्ष्ये ॥ न्यूनातिरिक्तार्थं घृताक्ततिलद्रव्येण समस्त व्याहृतिभि रष्टाविंशति संख्याकाभि राहुतिभि र्यक्ष्ये ॥ शेषेण स्विष्टकृत् ॥ अग्निं वायुं सूर्यं मग्निवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान्मरुतः स्वर्का न्वरुणमादित्य मदितिं प्रजापतिमेता अंगप्रधानार्थं देवता आज्येन अस्मिन् ग्रहयज्ञाख्ये कर्मण्यहं यक्ष्ये ॥ इति अन्वाधानं ॥

रौद्रात्मकं घोरं तं केतुं प्रमाणम्यहं ॥ ९ ॥ आदित्या० प्रार्थनापूर्वक नमस्कारं स० ॥ अनया पूजया आदित्यादि ग्रहमंडलदेवाः प्रीयंता ॥ **अथ कुंष्कंडिका** ॥ दक्षिणतो ब्रह्मासनं ॥ उत्तरतः प्रणीतासनं ॥ तत्र ब्रह्मोपवेशनं यावत्कर्म समाप्यते ॥ तावत्त्वं ब्रह्मा भव ॥ ब्रह्मानुज्ञातः उत्तरे प्रणीता प्रणयनं ॥ वामकरेण प्रणीतां संगृह्य ॥ दक्षिणकरेण जलं प्रपूर्य ॥ भूमौ निधाय ॥ आलभ्य उत्तरतोऽग्नेः स्थापनम् ॥ बर्हिप्रदक्षिणमग्नेः परिस्तरणं ॥ वा त्रिभि स्त्रिभि दर्भैः परिस्तरणं ॥ तच्च प्रागुदगग्रैः ॥ दक्षिणतो प्रागग्रैः ॥ प्रत्यग्उदगग्रैः ॥ उत्तरतः

( १ ) ब्राह्मणाभावे कर्तैव छत्र मुत्तरीय जलपात्र दर्भवटून् ब्रह्मासने निधाय ॥ इति शांतिचिंतामणौ ॥ ( २ ) प्रणिता उत्तरेस्थाप्या वितस्त्यन्तरतोग्नितः ॥ इति ग्रहयज्ञकल्पवल्याम् ॥ आसादनन्तु पात्राणां प्रादेशान्तरके बुधः ॥ इति कारिकाकारः ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥ अनंतगर्भिणं साग्रं कौशं द्विदलमेव च ॥ आज्यस्थाली कांस्यमयी यद्वा ताम्रमयी तथा ॥ प्रादेश मात्रा दीर्घा सा ग्रहीतव्याऽव्रणाशुभा ॥ द्वा प्रादेश मात्र्यूर्ध्वमियं नाति बृहन्मुखी ॥ मृन्मय्यौदुंबरीवापी चरुस्थाली प्रशस्यते ॥ खादिरादेः स्रुवः कार्यो हस्त मात्रप्रमाणतः ॥ अंगुष्ठ पर्वखात तन् त्रिभागं दीर्घे पुष्करम् ॥ अवह्नोक्त पुरुषाहार परिमितान्नादिना पूर्णं पूर्णपात्रमिति कृत्यचिंतामणौ ॥

---

अर्थ–( १ ) आदित्यादि नवग्रहोनु तथा अधिप्रत्यधिदेवता विगेरेनुं पूजन थया पछी संकल्प करी, करेलुं पूजन अर्पण करी, कुशांडीनो आरंभ करवो तेमां ब्रह्मासनथी आरंभी पात्रासादन लगी परीपूर्ण करवुं ॥

प्रागग्रैः अर्थवत् पात्रासादनं ॥ पवित्रछेदने दर्भास्त्रयः ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्गकुशाः पंच ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ स्रुची ॥ आज्यं ॥ तण्डुलाः ॥ पूर्णपात्रं॥ वरोवा ॥ पवित्रछेदनैः॥ पवित्रीकरणं ॥ द्वयोः पवित्रयोरुपरिपवित्रत्रयं निधाय॥ द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य ॥ त्रयाणां मूलाग्राणि एकीकृत्य ॥ अनामिकांगुष्ठेन द्वयोरग्रं छेदयेत् ॥ द्विग्राह्य ॥ त्रीणि उत्तरतः क्षिपेत् ॥ प्रोक्षणीपात्रे प्रणितोदक मासिंच्य ॥ पात्रांतरेण चतुर्वारं ॥ जलं प्रपूर्य वामकरे पवित्राग्रं दक्षिणेपवित्रयोर्मूलं धृत्वा मध्यतः पवित्राभ्या मुत्पवनं प्रोक्षणीपात्रजलस्य प्रोक्षणीनां सव्यहस्तेकरणं ॥ दक्षिणहस्तमुत्तानं कृत्वा ॥ मध्यमानामिकांगुल्योः मध्यपर्वाभ्या मपां उद्दिगनं ॥ प्रणितोदकेन प्रोक्षणीनां प्रोक्षणं ॥ आज्यस्थाल्याः प्रोक्षणं ॥ चरुस्थाल्याःप्रोक्षणं॥ संमार्गकुशानां प्रोक्षणं उपयमनकुशानां प्रोक्षणं॥समिधां प्रोक्षणं॥स्रुवस्य प्रोक्षणं॥स्रुचः प्रोक्षणं॥ आज्यस्य प्रोक्षणं ॥ तण्डुलानां प्रोक्षणं॥ पूर्णपात्रस्य प्रोक्षणं ॥ प्रणिताग्नयोर्मध्ये असंचरे प्रोक्षणीनां निधानं ॥ आज्यस्थाल्यां

---

अर्थ–(१) बधापात्रोनुं स्थापन थया पछी प्रोक्षणी पात्रने डाबाहाथमां लइ जमणा हाथवडे गोठवेला पात्रोनुं अनुक्रमे प्रोक्षण करवुं. पछी आज्यस्थालीमां घी नाखी चरुस्थालीमां चोखानाखी त्रणवखत पाणीथी धोइनाखी अग्नीपर दक्षिण तरफ घीनुं पात्र मुकवुं तथा अग्नीना मध्यभागमां चरु स्थालीमूकवी.

आज्यनिर्वापःचरुस्थाल्यां तण्डुलप्रक्षेपः॥तस्य त्रिःप्रक्षालनं॥ चरुपात्रे प्रणीतोदक मार्पिच्य॥ दक्षिणतः आज्याधिश्र-यणं ॥ मध्ये चरोरधिश्रयणं॥ ज्वलितोल्मुकेन पर्यग्निकरणं॥ अर्धश्रिते चरोः स्रुवस्य प्रतपनं॥ संमार्गकुशैः स्रुवस्य संमार्जनं ॥ अग्रैरग्रं ॥ मूलैर्मूलं ॥ प्रणीतोदकेनाभ्युक्षणं ॥ पुनःप्रतपनं ॥ देशे निधानं ॥ आज्योद्वासनं ॥ चरोरुद्वासनं ॥ वामकरे पवित्राग्रं दक्षिणे पवित्रयो मूलंधृत्वा ॥ मध्यतः पवित्राभ्यां ॥ आज्योत्पवनं ॥ आज्यावेक्षणं ॥ अपद्रव्यनिरसनं ॥ प्रोक्षिण्याः प्रत्युत्पवनं ॥ उपयमनकुशानादाय ॥ तिष्ठत् समिधोभ्याधाय ॥ प्रोक्षे-

(१) दैवेत्रिःक्षालिताक्षेया पितरि तण्डुलाः सकृत् ॥ इति कल्पवल्याम् ॥ अनतिशिथिलं अकठिनं अदग्धं कौशल्येन स्रपयेत् ॥ इति कृत्यचिंतामणौ ॥ (१) हौत्र सूत्रे ॥ भूरादि नवसूस्विष्ट कृते चाद्यचतुष्टये ॥ अन्वारंभोभवे चेषु सोन्वारंभः कुशेनवै ॥ अग्रेधृतार्थनाशाय मध्ये चैवमृतप्रजाः ॥ मूले च म्रियते होता स्रुवस्थानं कथं भवेत् ॥ अग्र मध्याच्चयन्मर्ध्यमूलमध्याच्च मध्यतः ॥ स्रुवं धारयते विद्वान् ज्ञातव्यंच सदाबुधैः ॥ तर्जनीं च वहिः कृत्वा कनिष्ठां च वहिस्तथा ॥ मध्यमा नामिकांगुष्ठैः स्रुवं धारयते द्विजः॥ स्रुवहोमे सदात्यागः प्रोक्षणी पात्रमध्यतः पाणीहोमे त्यागो न ॥ अधोमुखउर्ध्वपादः प्राङ्मुखोहव्यवाहनः ॥ तिष्ठत्येवस्वभावेन आहुतिः कुत्र दीयते ॥ सपवित्राम्बुहस्तेन वन्हेः कुर्या त्प्रदक्षिणाम् ॥ हव्यवाट् सलिलं दृष्ट्वा बिभेति संमुखोभवेत् ॥ इति कारिकायां ॥

---

अर्थ-(१) घृत तथा चरु थयो जोइने उतारवा पछी स्रुवाने तपावी प्रोक्षणकरी उपयमन कुशलइ समिधो आपवी, तथा पर्युक्षण करी जमणो पग उंचो पाडी ब्रह्माथी आरंभी स्रुवावती होम करवो ॥ स्रुवो मृगी मुद्राये झाली घीनो होम करवो.

॥ प्रदक्षिणवत् पर्युक्षणं ॥ पवित्रयोः प्रणीतासु निधानं ॥
र्युदकशेषेण सपवित्रहस्तेन अग्नेः ईशानकोणादारभ्य ॥ ब्रह्मान्वारब्ध ॥ स्रुवेण जुहुयात् ॥ मृगिमुद्रया घृत-
दक्षिणं जान्वाच्य जुहोति ॥ तत्राघारावाज्य भागौच ॥ ह्रीं प्रजापतये नमः ॥ इदं प्रजापतयेनमम ॥ इत्यग्ने रुत्तरभागे ह्रीं
स्रुवेण आज्यमादाय ॥ प्रजापतिं मनसा ध्यात्वा ॥ ह्रीं अग्नये नमः ॥ इदमग्नये नमम ॥ मध्ये ॥ ह्रीं सोमाय नमः॥
इन्द्राय नमः॥ इदमिन्द्राय नमम ॥ दक्षिण भागे ॥ शान्तीके वरदनामानमग्नि मावाहयामि॥अग्निं प्रज्वलितं वंदे जातवेदं हुता-
इदं सोमायनमम हस्ते अक्षतान् ग्रहीत्वा॥ वरदनामाग्नये नमः गंधं पुष्पं धूपं दीपं नैवेद्यं समर्पयामि ॥ अनया
शनं ॥ सुवर्णवर्ण ममलं समिद्धं विश्वतोमुखं ॥ यथाकालं प्रत्याहुति त्यागस्य कर्तुमशक्यत्वात्सर्वमेव
पूजया अग्निः प्रीयतां ॥ यजमानेन द्रव्यत्यागः कार्यः ॥ समिच्चरुतिलाज्यादिहविर्द्रव्यं या या यक्षमाणदेवता तस्यै
हविर्जातं देवताश्च मनसा ध्यात्वा ॥ इदं संपादितं ।

( १ कुष्कंडिका भाष्यकारादयः ॥ अग्नि पूजा बहिः प्रोक्तेति वचनाद्वहिरेव सर्वपूजन मितिकेचिदाहुः ॥ तत्रविष्णुधर्मोत्तरे ॥ मध्येपि गंधपुष्पादीन् दद्यादग्ने र्नसंशयः ॥ वहिर्नैवेद्य मात्रन्तु दातव्यं मितिनिश्चयः ॥ इति शांति मयूखे ॥

अर्थ– (१.) होममां पहेला प्रजापति आदिनी चारे आहुती आपवी, पछी वरदाग्निनुं स्थापन करी पूजन करी अग्निनुं ध्यान करवुं तथा करेली पूजा

तस्यै देवतायै नमम ॥ यथा दैवतमस्तु ॥ **ततोहोमं कुर्यात्** ॥ ह्रीं गणपतयेनमः इदं गणपतये नमम॥१॥ सूर्याय नमः इदं सूर्याय नमम ॥ ८ ॥ १ ॥ सर्वत्र त्यागमंत्रेणैव होमः कार्यः ॥ चन्द्रमसे नमः ॥ ८ ॥ २ ॥

( १ ) गणाधिपतये देयाः प्रथमा तु वराहुतिः ॥ अन्यथा विफलं विप्र भवतीह न संशयः ॥ इति कमलाकरे ॥ तिलाज्य चरुपक्वं च हवि र्मुख्यं प्रकीर्तित मिति ॥ ततो आदित्यादि नवग्रहाः क्रमेण पूर्वोक्त ग्रहहोमद्रव्येण अधिप्रत्यधिदेवताचतुश्चतुः संख्यया हुत्वा ॥ यस्य ग्रहस्य यासमित्सा तस्याधिदेवतायाः प्रत्यधिदेवतायाश्च योज्या ॥ विनायकादि दिक्पालान्ताक्रतु साद्गुण्यं क्रतुसंरक्षण देवताः पलाशो दुंबरान्यतम समि चरु तिलाज्य द्रव्येण द्वि द्वि संख्यया जुहोति ॥ समित्सरला सत्वचा कानिष्ठिकाग्रवत् स्थूला द्वादशांगुलदीर्घा ग्राह्या ॥ अत्र त्रिसृभि दूर्वाभिरेकाहुतिः ॥ तथैव त्रिपत्रकुशै रेकाहुतिः ॥ द्रवद्रव्य स्रुवेणैव पाणिना कठिनं हविः ॥ प्रधानं पायसं प्रोक्तं सघृतं च सशर्करं ॥ अष्टोत्तरं शतं चैव जुहुया त्तिलसर्पिषा ॥ समिदाज्यं चरुं चैव तिलहोम स्ततः परं ॥ क्रमेण जुहुया देव मंत्रै रेभिःपृथक् पृथक् ॥ समिदर्कमयी सूर्ये पालाश शशिनस्तथा ॥ खादीरि भूमिपुत्राय अपामार्गी बुधस्य च ॥ गुरोरश्वथ्थजा प्रोक्ता शुक्रस्यौदुंबरी शुभा ॥ शमी शनैश्वरे राहो दूर्वा केतोश्च दर्भजा ॥ अष्टोत्तरन्तु साहस्रं शतमष्टाधिकंतथा ॥ अष्टाविंशति रष्टो वा यजेत् पंचामृत प्लुताः ॥ इति भास्करादौ ॥ आचारात्, द्राक्षेक्षु पूगनारिंगं जंबीरं बीजपूरकं ॥ उत्तति नालिकेरन्तु दाडिमं सर्वतः फलं॥ गुग्गुलस्य ततोहोमं सर्षपं तदनंतरं ॥ होमान्ते यजमानेन कर्त्तव्यं ग्रहपूजनं

---

अर्थ–( १ ) अग्नि पूजन थया पछी बधी आहुती वखते त्याग न थइ शके तेटला माटे हाथमां जळ तथा फळ लइ उपरनो त्याग संकल्प करवो, तथा होममां पेहेला गणपतिने १ एक आहुती आपीने स्थापित देवोने आहुति आपी तृप्त करवा, तथा स्थापित देवोने समीदोनो होम करवो तेमां सूर्यने आंकडानी चंद्रने खाखरनी, मंगळने खेरनी, बुधने जींझोटानी, गुरुने पीपळानी, शुक्रने उमयडानी, शनीने समडीनी, राहुने दुर्वा, केतुने दर्भ, एप्रमाणे नवेग्रहोनी समीधो

भौमाय नमः ॥ ८ ॥ ३ ॥ बुधाय नमः ॥ ८ ॥ ४ ॥ बृहस्पतये नमः ॥ ८ ॥ ५ ॥ शुक्राय नमः ॥ ८ ॥ ६ ॥ शनैश्चराय नमः ॥ ८ ॥ ७ ॥ राहवे नमः ॥ ८ ॥ ८ ॥ केतवेनमः ॥ ८ ॥ ९ ॥ **अथाधिदेवताः** ॥ शंभवे नमः ४ ॥ १ ॥ उमायै नमः ४ ॥ २ ॥ स्कंदाय नमः ॥ ४ ॥ ३ ॥ विष्णवे नमः ॥ ४ ॥ ४ ॥ ब्रह्मणे नमः ॥ ४ ॥ ५ ॥ इन्द्राय नमः ॥ ४ ॥ ६ ॥ यमाय नमः ॥ ४ ॥ ७ ॥ कालाय नमः ॥ ४ ॥ ८ ॥ चित्रगुप्ताय नमः ॥ ४ ॥ ९ ॥ **अथप्रत्यधिदेवताः** ॥ अग्नये नमः ॥ ४ ॥ १ ॥ अद्भ्यो नमः ॥ ४ ॥ २ ॥ धरायै नमः ॥ ४ ॥ ३ ॥ नारायणाय नमः ॥ ४ ॥ ४ ॥ इन्द्राय नमः ॥ ४ ॥ ५ ॥ इन्द्राण्यै नमः ॥ ४ ॥६॥ प्रजापतये नमः ॥ ४ ॥ ७ ॥ सर्पेभ्यो नमः ॥ ४ ॥ ८ ॥ ब्रह्मणे नमः ॥ ४ ॥ ९ ॥ **अथगणपत्यादिदेवताः** ॥

—होमवी. तेमज जे देवना अधीदेवता प्रत्यधि देवता जेछे, तेनी पण तेम समीधगणवी. ग्रहोर्नासमीद् आपवानो८ नो क्रम लीधोहोयतो तेना आधि देवता प्रत्यधि देवताओने ४ समीध आपवी. तेम क्रतु साद्गुण्य देवताओने समीदो २ आपवी. जेटलुं द्रव्यछे तेटलानो सुवाथी होम करवो तथा कठिण हविजेछे तेनो हाथेथी होम करवो. होम सघळो समाप्त थाय पछी गुगळनो होम करी सरसपनो होम करी डाबोपग भांयपर नाण वखत ठोकी काने पाणी अरकाडी. लक्ष्मीहोम करवो, तेमां लक्ष्मीनुं पूजन करी मंत्रो श्रवण करवा लक्ष्मी होम संपूर्ण करवो, पछी संकल्पकरी ओछुं यधारे थयुं होय तेने माटे प्रायश्चीत्त होमकरवो. ते आहुति २८ अथवा १०८ आपी करवो ॥

गणपतये नमः ॥ ८ ॥ १ ॥ दुर्गायै नमः ॥ २ ॥ २ ॥ वायवेनमः ॥ २ ॥ ३ ॥ आकाशाय नमः ॥ २ ॥ ४ ॥ अश्विभ्यां नमः ॥ २ ॥ ५ ॥ इति पंच देवताः ॥ वास्तोष्पतये नमः ॥ २ ॥१॥ क्षेत्राधिपतये नमः ॥ २ ॥ २ ॥ ॥ **अथलोकपालाः** ॥ इन्द्राय नमः ॥ २ ॥ १ ॥ अग्नये नमः ॥ २ ॥ २ ॥ यमाय नमः ॥ २ ॥ ३ ॥ निर्ऋतये नमः ॥ २ ॥ ४ ॥ वरुणाय नमः ॥ २ ॥ ५ ॥ वायवे नमः ॥ २ ॥ ६ ॥ सोमाय नमः ॥ २ ॥ ७ ॥ ईशानाय नमः ॥ २ ॥ ८ ॥ ब्रह्मणे नमः ॥ २ ॥ ९ ॥ अनंताय नमः ॥ २ ॥ १०॥ महारुद्राय नमः ॥२॥११॥ एतादेवान्समिदाज्यं चरुतिलादिद्रव्यैः पृथक् पृथक् होमकार्यः ॥ विशेषहोमः ॥ द्राक्षाः सूर्याय नमः ॥ १ ॥ इक्षु चन्द्रमसे नमः ॥ २ ॥ पूगीफलं भोमाय नमः ॥ ३ ॥ नारिंगं बुधाय नमः ॥ ४ ॥ जम्बीरं बृहस्पतये नमः ॥ ५ ॥ बीजपूरकं शुक्राय नमः ॥ ६ ॥ उत्तर्ति शनिश्चराय नमः ॥ ७ ॥ नालिकेरं राहवे नमः ॥ ८ ॥ दाडिमं केतवे नमः ॥ ९ ॥ गुग्गुलं रुद्राय नमः ॥ अथ सर्षपहोमः ॥ सर्वाबाधा प्रशमनं त्रैलोक्यस्याखिलेश्वरी ॥ एव मेव त्वयाकार्य मस्मद्वैरि विनाशनं ॥ इति सर्षपहोमः ॥ वामपादभूमौ त्रिस्ताडनं ॥ उदकं स्पृशेत ॥ **लक्ष्मी-**

ऑचारात् लक्ष्मीहोमः ॥ लक्ष्म्यास्तुदर्शनं पुण्यं दर्शनादभिवंदनं ॥ वंदनात स्पर्शनं श्रेष्ठं स्पर्शना दपिपूजनं ॥ पूजनात् होमश्रेष्ठः ॥

लक्ष्म्याःमन्त्रैः लक्ष्मीहोमं कुर्यात् ॥
होमः ॥ पय शर्करा घृत कदली फलाक्षतान् एकस्मिन्पात्रे एकीकृत्य ॥ हस्ते जलं गृहीत्वा ॥ अद्येत्यादि०॥ असुकवासरे मम गृहे अलक्ष्मीविध्वस्तये दशाविधलक्ष्मीप्राप्तये लक्ष्मीहोमं करिष्ये ॥ विज्ञानसंपत्सुखदां सनातनां विचित्रवाग् भूतिकरीं मनोहराम् ॥ अनंतसंमोदसुखप्रदायिनीं नमाम्यहंभूतिकरीं महाश्रियम् ॥ १ ॥ समस्तभूतान्तरसंस्थिता त्वं समस्तभोक्तेश्वरि विश्वरूपे ॥ तन्नास्तियेत्वतिरिक्तवस्तु त्वत्पादपद्मं प्रणमाम्यहंश्रीः ॥ २ ॥ दारिद्र्यदुःखौघ तमोपहंत्री त्वत्पादपद्मं मयि सन्निधत्स्व ॥ दीनार्त्तिविच्छेदनहेतुभूतैः कृपाकटाक्षै रभिषिंच मां श्रीः ॥ ३ ॥ अम्बप्रसीद करुणासुदयार्द्रदृष्ट्या मां त्वत्कृपा

होमे समाप्त थया पछी गोरे चार स्त्रियोने तथा परणनारने लइ घरमां जवुं. त्यां जइ गोत्रज सामे बेसाडी पोस भरावबी. तेमां कंकु करी पान ७ सोपारी ७ पैसा ७ रु. १ मुकाववो. तथा चार स्त्रीयो पासे चार चार वखत भात वधावबु पछी घरमांथी परणनारने तेडीने बहार ग्रहयज्ञनी जगापर आवी पूर्वाभिमुखे उभारही हाथमांनी पोसना पदार्थ ग्रहना मंडपपासे मुकी देवा तथा माताना जमणा हाथतरफ पाटला पर बेसी स्थापित देवताओनुं उत्तरपूजन थाय तेमां भाग लेवो. केटलीक न्यातोमां परणनारने स्त्रीपुरुषना वचमां बेसाडेछे ए अविहितछे अने शास्त्रना प्रमाणोथी प्रायश्चित्ती थवायछे तो तेम बेसवानी जरूर नथी जुवोके रूढी छे छतां प्रायश्चित्त न थतुं होय त्यां रूढी ग्रहण करीये तो अडचण नथी पण धर्म कार्यमां शास्त्रने वेगळुं मूकी अनिष्ट फल आपनारुं कार्य करवुं ए तदन अधोगतीने आपनारुं छे माटे आवी समजण आप्या छतां कोण करशे अर्थात् न करवुं ॥

द्रविण गेह मिमं कुरुष्व ॥ आलोकयत प्रणत रुद्गतयेन हंत्री त्वत्पादपद्म युगुलं प्रणमाम्यहं श्रीः ॥ ४ ॥ इति लक्ष्मीहोमः अद्येत्यादि० ॥ अमुकवासरे अस्मिन्कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं अष्टोत्तरशत संख्यया वा अष्टाविंशति संख्यया तिलद्रव्येण व्याहृतिहोमं करिष्ये ॥ अग्निवायुसूर्येभ्यो नमः ॥ इति होमं समाप्य ॥ ॥ **अथ उत्तरपूजनं** ॥ अद्येत्यादि० कृतस्य कर्मणः सांगतासिध्यर्थं स्थापितदेवतानां मृडाग्ने श्चोतरपूजनं करिष्ये ॥ मृडाग्नयेनमः ॥ गंधं समर्पयामि ॥ मृडाग्नये नमः ॥ पुष्पं स० ॥ मृडाग्नये नमः धूपं स० ॥ मृडाग्नये नमः दीपं

—अजयोः खरयोश्चैव दंपत्योः गुरुशिष्ययोः ॥ नंदीशंकरयो मध्ये हन्ति पुण्यं दिवाकृतं ॥ पूजास्विष्टं नवाहुत्यो बलिः पूर्णाहुति स्तथा ॥ संस्रवादि विमोकांतं होमशेषसमापनं ॥ श्रेयः सपात्रदानं च अभिषेको विसर्जन मिति ॥ पूर्वमज्वलितोह्यग्नि र्हविर्द्रव्यंबुभूक्षितः ॥ तृप्तो निर्धूम निर्ज्वालो मृडाग्निः परिकीर्तितः ॥ इति ग्रहरत्नवल्यां ॥

---

—एवा प्रमाणो घणाज छे माटे ज्ञातापुरुषो वचमा बेसाडवानु करशे नहि तेम सारा समजु द्विजो करावशे नहि तो हूं तेमनो उपकार मानीश ॥ उत्तर तंत्राग पहेला अनुक्रमे थया पछी गणपती नवग्रहादिनु पण पूजन करी शक्ति होय तो ग्रहोना दान करवा. ते न बने तो तेनो निष्क्रय मूकवो. पछी नवे ग्रहोने तेना मंत्रोथी अर्घ्यं आपवा.

—उत्तर पूजन करी स्विष्टकृत नवाहुती बलीदान करी पूर्णाहुती करवी. उत्तरपूजन वखते अग्निनु प्रथम पूजन करवु. ते मृडाग्नि नामथी पंचोपचारे करवु. ते

स०॥मृडाग्नये नमः ॥ नैवेद्यं स०॥अनया पूजया मृडाग्निः प्रीयतां॥विघ्नहर्त्रे गणेशाय सांगायसपरिवाराय नमः गंधं स० विघ्नहर्त्रे० पुष्पं स० विघ्नहर्त्रे० धूपं स० विघ्नहर्त्रे० दीपं० विघ्नहर्त्रे० नैवेद्यं स० साद्गुण्यार्थं दक्षिणां स० अनया पूजया विघ्नहर्ता गणेशः प्रीयतां ॥ सगणेशगौर्याद्यावाहितमातृभ्योनमःगंधं समर्पयामि॥सगणेशगौर्याद्या० पुष्पं स० सगणेशगौर्याद्या० धूपं स०॥सगणेशगौर्याद्या० दीपं स०॥ सगणेशगौर्याद्या० नैवेद्यं स० अनया पूजया सगणेशगौर्याद्यावाहितमातरः प्रीयंतां ॥ आदित्याद्यावाहितदेवेभ्योनमः गंधं समर्पयामि०आदित्याद्या० पुष्पं स० आदित्याद्या० धूपं स०आदित्याद्या० दीपं स० ॥ आदित्याद्या०नैवेद्यं स० अनेन आदित्यादिदेवाः प्रीयंताम् ॥ शक्त्याग्रहदानानि॥ पूजान्ते सुपात्रे जलपुष्पाक्षत फलादीनि निधाय॥ तत्पात्रं हस्ताभ्यामादाय॥आदित्याद्या-स्थापितदेवेभ्यो प्रत्येकं पुरुषाहार परिमितानि नैवेद्यानि भवंति ॥ आदित्ये कपिलां धेनुं शंखं सोमाय दापयेत् ॥ भौमे रक्तमनड्वाहं सोमपुत्राय कांचनं ॥ गुरोश्चपीतवासांसि शुक्रायाश्वसित स्तथा ॥ कृष्णागौ मंदवारस्य राहोश्छाग स्तथैवच ॥ कृष्णायसं तथाकेतौ सर्वेषा मेवकांचनं ॥ इति शांतिचिंतामणौ

अर्थ–( १ ) स्थापित देवोनु उत्तर पूजन थया पछी शक्ती प्रमाणे नवे ग्रहोना दानो करवा ते न बनी शके तेम होयतो तेनो निष्क्रय लइ संकल्प करी मुकवो पछी सारा पात्रमा जळ लइ तेमा गंध, पुष्प, फल, अक्षत द्रव्य, मुकीने हाथे झाली लखेला मत्रवडे सुर्यथी आरभी स्थापित देवोने अर्घ आपवा.

ग्रहाः सर्वे पीठेयेऽत्र व्यवस्थिताः ॥ ते गृह्णन्तु मयादत्त मिममर्घ्यंनमोनमः इति मन्त्रेण अर्घंदत्वानमस्कारं स्व स्वमंत्रैःकुर्युः॥नमोरथमादित्यायदिप्यमानस्वतेजसे॥ज्योतिस्थःसर्वभूतेभ्यःससूर्यःप्रीयतां मम ॥१॥ द्विजराज महा तुंग तारापतिरनन्दितः॥मासे मासे क्षयो वृद्धिःससोमःप्रीयतां मम ॥२॥ वालःकुमारको यस्तु रक्तवर्णःसुशोभनः ॥ अव्ययः पृथिवीपुत्रः स भौमः प्रीयतां मम ॥ ३ ॥ सौम्यपुत्रो वुधो सौम्यो वुधोनाम महाग्रहः ॥ आदित्यः पथगोयस्तु सवुधः प्रीयतां मम ॥ ४ ॥ वृहस्पति र्वृहत्तेजो ़हद्बुद्धि र्वृहद्यशः ॥ सुराणां च गुरुर्यस्तु स गुरुः प्रीयतां मम ॥ ५ ॥ असुराणां गुरुर्यस्तु ग्रहाणां परमां गतिः ॥ शुक्लवर्णः शुक्लदीप्तिः सशुक्रः प्रीयतां मम ॥ ६ ॥ शनिश्चरः शनैश्चारी उग्ररूपो रवेः सुतः ॥ कृष्णवर्णः क्रूरदृष्टिः सशनिः प्रीयतां मम ॥ ७ ॥ आसुरः सिंहिकापुत्रो राहुश्चंद्रार्कमर्दनः ॥ स्थापितस्तु निमित्तार्थे स राहुःप्रीयतां मम ॥८॥ अपां तु देव सगणः केतुः कपोतवाहनः ॥ सानुचारः सुमेधाश्च सकेतुः प्रीयतां मम ९ ॥ शम्भुःप्रभृतयो देवाः पीठे येऽत्रमयार्चिताः ॥ ते सर्वेशुभदाः संतु सायुधाः सानुगाः सदा ॥ १० ॥ इति प्रार्थयेत् ॥ ततो हुतशेप हविर्द्रव्यं स्रुचिपूरितं गृहीत्वा ॥ व्रह्मान्वारब्धः

स्विष्टकृद्धोमं कुर्यात ॥ अग्नये स्विष्टकृते नमः ॥ इदमग्नये स्विष्टकृते नमम ॥ **ततो नवाहुतयः** ॥ अग्नये नमः इदमग्नये नमम ॥ वायवे नमः ॥ इदंवा० ॥ २ ॥ सूर्याय इदं सूर्याय० ॥ ३ ॥ अग्निवरुणाभ्यां० इद मग्निवरुणाभ्यां० ॥ ४ ॥ पुनः ॥ अग्निवरुणाभ्यां० इदमग्निवरुणाभ्यां ॥ ५ ॥ अग्नये अयसे नमःइदमग्नयेअयसे० वरुणाय सवित्रे विष्णवे विश्वेभ्योदेवेभ्यो मरुद्भयः स्वर्केभ्यो० इदंवरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भयः स्वर्केभ्यश्च ॥७॥ वरुणायादित्यायादितये नमःइदं वरुणायादित्यायादितये०॥८॥प्रजापतये नमः इदं प्रजापतयेनमम ॥९॥ **अथ बलिदानं** ॥तत्रैवं॥ अग्न्यायतनस्य दिक्षु विदिक्षु च दशदिक्पालान् माषभक्तबलयो देयाः ॥अद्येत्यादि० ॥ कृतस्य कर्मणः सांगतासिध्यर्थं दिक्पालपूर्वकस्थापितदेवतानां बलिदानं करिष्ये ॥प्राच्यां दिशि॥ इन्द्रं सांगं सपरिवारं सायुधं

(१) स्विष्टकृद्धोमः सर्वद्रव्यैः कार्यः ॥ इति शांति कमलाकरे ॥ (२)बलिहीने तु दुर्भिक्षंगंधहीनत्वयोग्यता ॥ धूपहीने तथोद्वेगो वस्त्रहीने धनक्षयः ॥ इति भविष्यपुराणवाक्यात् ॥

अर्थ (१)होमता रेहेलु द्रव्य तेमांथी शुची भराय एटलुं लइ अग्निमा आहुति आपवी, तेनेस्विष्टकृत केहेछे. तेपछी नव आहुती घीनी सूवाथी आपवी (२) कुंडनी अथवा स्थंडिलनी दशबाजुये इंद्रादिदेवोने माटे बली दान (वडा-पुरी दुध पाक दीवो) गोठवी तेना प्रत्येकनु पूजन करी संकल्पकरवो पछी प्रार्थना दर्शेनी यया बाद गणपतीनवेग्रहोने बली मुकवु-तथा क्षेत्र पालनु बली करवु.

सशक्तिकं एभिर्गंधाद्युपचारैः स्त्वामहं पूजयामि ॥ इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि भो इन्द्र दिशंरक्ष बलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ इन्द्रःसुरपतिर्जिष्णुः स्वर्लोकेशो महाबलः॥ शतयागाधिपोदेव स्तस्मै यागात्मने नमः ॥ प्रार्थनां समर्पयामि ॥ अनेन बलिदानेन इन्द्रः प्रीयतां नमम ॥ एवं सर्वत्रोहः कार्यः ॥ आग्नेयां ॥ अग्निं सांगं सपरिवारं सशक्तिकं एभिर्गन्धा० अग्नये सांगाय सपरिवाराय० इमं सदीप मापभक्तबलिं स० भोअग्ने दिशंरक्ष बलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुः कर्ता शांतिक० पुष्टिक० तुष्टिक० निर्विघ्नक० वरदो भव ॥ सर्वदेवमयो देवो रक्तोवन्हिर्महाबलः ॥ सप्तजिह्वो महावीर्यो नमो वैश्वानरायते ॥ प्रार्थनां स० ॥ अनेन पूजनेन अग्निः प्रीयतां नमम ॥ दक्षिणस्यां ॥ यमं सांगं सपरिवारं सायुधं सशक्तिकं एभिर्गंधाद्यु० यमाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं स० भो यम दिशंरक्ष बलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुः कर्ता शांन्तिक० पुष्टिक० तुष्टिक० निर्विघ्नक० वरदोभव ॥ दंडहस्तमयोदेवो धर्माध्यक्ष महाबलः ॥ आवाहये महादेवं तस्मै कालात्मनेनमः ॥ प्रार्थना स० अनेन पूजनेन

निर्ऋतिं सांगं सपरिवारं सशक्तिकं एभि गंधा० निर्ऋतये सांगाय सपरिवाराय इमं-
यमःप्री० ॥ नैर्ऋत्यां ॥ सदीपं मापभक्तवलिं स० भो निर्ऋते दिशंरक्ष वलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुः कर्ता शान्तिक०
पुष्टिक० तुष्टिक० निर्विघ्नक० वरदो भव ॥ राक्षसेभ्यो च रक्षार्थं भवन्नेत्रप्रतिष्ठितं ॥ निर्विघ्नयज्ञभूमिं च कुरु त्वं
राक्षसाधिप॥ प्रार्थनां स०॥अनेन पूजनेन निर्ऋतिःप्री०॥ प्रतीच्यां वरुणं सांगं सपरिवारं सायुधं सशक्तिकं एभि
गंधा० वरुणाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपंमापभक्तवलिं स० भो वरुणदिशंरक्ष वलिं भक्ष
ममस कुटुंबस्याभ्युदयं कुरुकुरु॥ आयुःकर्ता पुष्टिक० तुष्टिक०निर्विघ्नक० वरदो भव॥पाशहस्तात्मकोदेवो जलराजा-
धिपो महान्॥निम्नगामीतिविख्यातो वरुणाय नमोनमः॥ प्रार्थनां स० अनेन पूजनेन वरुणःप्री०॥वायव्यां वायुं सांगं
सपरिवारं सायुधं सशक्तिकं एभिगंधा०वायवे सांगाय सपरिवाराय सशक्तिकाय इमं सदीपमापभक्तवलिं स०भो वायो
दिशंरक्ष वलिंभक्ष ममसकुटुंबस्याभ्युदयं कुरुकुरु॥ आयुःकर्ता पुष्टिक० तुष्टिक० निर्विघ्नक० वरदोभव वायुस्तुबल-
माक्रम्य वायुराजः सूपूजितः ॥ अहोवायो मृगारूढ दशारक्षनमोनमः प्रार्थनां स० अनेन पूजनेन वा० प्री० ॥
॥ उदीच्यां ॥ सोमं सांगं सपरिवारं सायुधं सशक्तिकं एभि गंधा० ॥ सोमाय सांगाय सपरिवाराय सशक्तिकाय

इमं सदीपमापभक्तवलिं स० भोसोम दिशंरक्ष वलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता पुष्टिक० तुष्टिक० निर्विघ्नक० वरदो भव ॥ नक्षत्राणां च सर्वेषां सोमराजा प्रकीर्तितः ॥ रत्नांगी च महाहस्त सोमराजायते नमः॥ प्रार्थनां स० अनेन पूजनेन सोमःप्री०॥ईशान्यां ॥ईश्वरं सांगं सपरिवारं सायुधं सशक्तिकं एभि गंधा० ईश्वराय सांगाय सपरिवाराय सशक्तिकाय इमं सदीपमापभक्तवलिंस० भो ईश्वर दिशंरक्ष वलिंभक्ष मम सकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता पुष्टिक० तुष्टिक० निर्विघ्नक० वरदोभव ॥ विद्याधराथभूतेश ज्ञानमूर्वेदपारगः॥ सुदेशोदेवपूज्यश्च भूपालश्च वलिप्रियः ॥ प्रार्थनां स० ॥ अनेन पूजनेन ईश्वरःप्रीयतां नमम ॥ पूर्वेशानयोर्मध्ये उर्ध्वायां ब्रह्माणं सांगं सपरिवारं सायुधं सशक्तिकं एभि गं० ॥ ब्रह्मणे सागाय सपरिवाराय सशक्तिकाय ॥ इमं सदीपमापभक्तवलिं स० ॥ भो ब्रह्मन् दिशंरक्ष वलिंभक्ष ममसकुटुंबस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता पुष्टिकर्त्ता तुष्टिकर्त्ता निर्विघ्नक० वरदोभव॥ ब्रह्मानुवलमाक्रम्य ब्रह्मराजः सुपूजितः॥ अहोब्रुद्धः स्थितो ब्रह्मा उर्ध्वस्यामरक्ष सर्वदा ॥ प्रार्थनां स० ॥ अनेन पूजनेन ब्रह्मा प्री० ॥ निर्ऋति पश्चिमयो र्मध्ये ॥ अधस्थायां ॥ अनंतं सांगं सपरिवारं सायुधं सशक्तिकं एभि गं० ॥ अनंताय सांगाय सपरिवाराय सशक्तिकाय इमं सदीपमापभक्त वलिं

स० भो अनंत दिशंरक्ष वलिंभक्ष ॥ मम सकुडुंवस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता पुष्टिक० तुष्टिक० निर्विघ्नक०
वरदोभव ॥ यो सावनंतरूपेण ब्रह्माण्डं सचराचरं ॥ पुष्पवत्धार्यते मूर्ध्नि तस्मै नित्यंनमोनमः ॥ प्रार्थनां स० ॥
अनेन पूजनेन अनंतः प्री० ॥ ततो गणपतिसमीपे वलिं निधाय ॥ गणपतिं सांगं सपरिवारं सशक्तिकं एभि-
गंधा० ॥ गणपतये सांगाय सपरिवाराय सशक्तिकाय इमं सदीप माषभक्तवलिं स० ॥ भोगणपते दिशंरक्ष
वलिंभक्ष मम सकुडुंवस्याभ्युदयं कुरु कुरु ॥ आयुःकर्ता पुष्टिक० तुष्टिकर्ता निर्विघ्नकर्ता वरदोभव ॥ वक्रतुण्डम-
हाकाय सूर्यकोटि समप्रभ ॥ अविघ्नं कुरु मेदेव वलिंभक्ष नमोनमः ॥ प्रार्थनां स० ॥ अनेन पूजनेन गणपतिः
प्री० ॥ सगणेश गौर्याद्यावाहितमातृः सांगाः सपरिवाराः सायुधाः सशक्तिकाः ॥ एभि गंधा० सगणेशगौर्याद्या-
वाहित मातृभ्यो सांगाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीप माषभक्तवलिं स० भोभो सगणे-
शागौर्याद्यावाहिमातरः दिशंरक्षत वलिंभक्षत मम ग्रहे सकलकुडुंवस्याभ्युदयं कुरुत आयुः कर्त्र्यः पुष्टिकर्त्र्यः
तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाःभवत ॥ अम्ब त्वद्धतसवाक्यानि वलिपूजादियत्कृतं ॥ तानि स्वीकुरु सर्वज्ञे
दयालुत्वेन सादरं ॥ प्रार्थनां स० ॥ अनेन पूजनेन सगणेशगौर्याद्यावाहित मातर॰ प्रीयंतां ॥ ग्रहवलिदानं ॥ आदि-

त्यादिदेवान् सांगान् सपरिवारान् सायुधान् सशक्तिकान् एभि गंधा॰ आदित्यादि देवेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपमापभक्तबलिं स॰ ॥ भो भो आदित्यादि ग्रहाः दिशंरक्षत बलिंभक्षत ममाभ्युदयंकुरुत आयुः कर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः वरदाः भवत ॥ ग्रहाराज्यं प्रयच्छन्ति ग्रहाराज्यं हरन्ति च ॥ ग्रहैस्तु व्यापितं सर्वं त्रैलोक्यं सचराचरं ॥ प्रार्थनां स॰ ॥ अनेन पूजनेन आदित्याद्यावाहित देवाः प्रीयंतां नमम ॥ क्षेत्रपाले बलिं ॥ अद्यपूर्वोच्चरित॰ सकलारिष्टशान्त्यर्थं क्षेत्रपालपूजन बलिदानं च करिष्ये ॥ क्षेत्रपालबलिद्रव्याय नमः इति यथाशक्ति गंधादिभिः पूजयेत् ॥ क्षेत्रपालाय सांगाय भूतप्रेतपिशाच डाकिनी शाकिनी वैतालादि परिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपमापभक्तबलिं स॰ भो भो क्षेत्रपाल सर्वतो दिशं रक्ष बलिं भक्ष ममसकुटुंबस्याभ्युदयंकुरु कुरु ॥ आयुः कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव॥प्रार्थनां॥क्षौंनमः क्षेत्रपालस्त्वं भूतप्रेत गणैः सह॥पूजां बलि गृहाणेमं

---

अर्थ–(१) क्षेत्रपालनुं बली छाबडीमा अथवा सूपडामा मुकवु–तेमा पुष्कल भात भरवो. तथा पुरी दुध पाक वडा जे कर्युं होय ते मुकी चोखडो दीवडो करी चार दिवेट मुकी तेनु मंत्र प्रमाणे पुजन करी बलीनो संकल्प करवो ॥१॥ ते बली चकले मुकाववु–ते बली लेनार ब्राह्मणनुं पूजन करी दक्षिणा आपी तेनी पासे मुकाववो–ते न होय तो जाते चकले जइ यजमाने मुकवो.

सौम्यो भवतु सर्वदा॥१॥आरोग्यमायु मेंदेहि निर्विघ्नं कुरुसर्वदा।ह्रीं नमःक्षेत्रपालाय महाबल पराक्रमाय बर्बरकेशाय समस्त व्यापकाय चतुःषष्ठिरूपाय नगरग्रामक्षेत्रवनव्यापिने सकलजगत्पूजिताय ।।हां ह्रीं हुंक्षेत्रपाल बलिं गृहाण भैरवरूपेण कुरु कुरु क्रूँक्रूँफाँफाँह्रींह्रींडमरु डमरु कुरुते यमदंडहस्ते हूंहूंहूं रूपादि किलि किलि किलितं पातुनः क्षेत्रपालः ॥ यंयंयंयक्षरूपंदशदिशिवदनं भूमिकंपायमानं संसंसंहारमूर्तिशिरसिधृतजटाशेखरं चन्द्रबिंबं ॥ दंदंदं-दीर्घकेशं कृतनखवपुषं उर्ध्वरेखाकरालं पंपंपंपापनाशं प्रणतपशुपतिं भैरवं क्षेत्रपालं ॥ १ ॥ इति संप्रार्थ्य ॥ अने-नपूजनपूर्वक बलिदानेन क्षेत्रपालः प्रीयतां ॥ बलिग्राहि ब्राह्मणं पूजयेत् ॥ बलिं विसृज्य ततस्थानं जलेन संप्रो-क्ष्य ॥ ब्राह्मणाः शान्तिसूक्तं पठेयुः ॥ आदौ नमामि चतुराननवंद्यमान मिच्छानुकूल मखिलं च वरं ददानं ॥ तंतुंदिलं द्विरसनाप्रिययज्ञसूत्रं पुत्रं विलासचतुरं शिवयो शिवाय ॥ १ ॥ आदौनमामि भजता मभिलाषदात्री धात्री समस्तजगतां दुरितापहंत्री ॥ संसारबंधनविमोचनहेतुभूतां मायां परां समधिगम्यपरस्यविष्णोः ॥ २ ॥ आदौस्मरामि भवभीतिमहार्तिशान्त्यै नारायणंगरुडवाहन मब्जनाभं ॥ ग्राहाविभूतवरवारणमुक्तिहेतुं चक्रायुधं

अर्थ–( १ ) बलीदान मुक्या पछी ब्राह्मणोए शांति पाठना मंत्रो भणवा–

तरुणवारिजपत्रनेत्रं ॥ ३ ॥ आदौनमामि मनसा वचसाचमूर्ध्ना पादारविंदयुगुलं परमस्य पुंसः ॥ नारायणस्य नरकार्णवतारणस्य पारायण प्रवण विप्र परायणस्य ॥ ४ ॥ यजमानः पाणि पादं प्रक्षाल्याचम्य पूर्णाहुति होमं कुर्यात् ॥ अद्यपूर्वोच्चरित कृतस्य कर्मणः सांगतासिध्यर्थं वसोर्धारा समन्वित पूर्णाहुति होमं करिष्ये ॥ **अथ पूर्णाहुतिः** ॥ चतुर्गृहीत आज्यमादाय तदुपरि रक्तवस्त्रेणाच्छादितं, सुशोभितं कृत्वा नालिकेरं निधाय, ततो स्थानात् उत्थाय पूर्णाहुति मंत्रान् पठेत ॥ तत्र मंत्राः ॥ चतुःशृंग त्रिधाबद्धो द्विमूर्धा नासिका द्वयंः ॥ षण्नेत्र श्च चतुःश्रोत्र त्रिपादः सप्तहस्तकः ॥ १ ॥ याम्यभागे चतुर्हस्तः सव्यभागे त्रिहस्तकः ॥ स्रुवं स्रुचं तथा शक्ति मक्षमालां च दक्षिणे ॥ २ ॥ तोमरं व्यंजनं चैव घृतपात्रं

अर्थ-( १ ) पूर्णाहुती वखते स्रुचीमां चार सरखा घी लेवुं तथा तेनापर नारियल मुकवुं. तेने लाल कपडो वींटाळी अबील गलाल सिंदूरथी सुशोभित करवुं. पछी ते लइ उभा थवुं. [illegible] यजमाने आचार्यने अडकी रेहेवुं. तथा यजमान पत्नीये पोताना स्वामीने अडकवुं तथा कुंटुंब तथा पुत्रोये पण त्यां उभा रहेवुं. गोरे आवेला ग्रहस्थोने चांदलाकरी भात चोडवुं. त्यारबाद नारीयल होमाया पछी वसोर्धारा होम थया पछी आवेला ग्रहस्थोए पोतानी जगाये बेसीजवुं–आ ठेकाणे पोताना पित्राइ० सगावालाने बोलाववानो संप्रदाय छे तथा जे आव्या होय तेने चांलोकरी भात चोडी नाडुं बांधे छे. पछी पूर्णाहुतिनुं काम थया पछी केटलीक न्यातोमां गोळ धाणा पण आपेछे, ए संप्रदायछे.

दक्षिणे च चतुर्जिह्व त्रिजिह्व श्चोत्तरे मुखे ॥ कोटि
तु वामके ॥ नियुक्तः सप्तभिर्हस्तै र्द्विमुखः सप्तजिह्वकः ॥ ३ ॥ रक्तमाल्यांबरधरो
द्वादशमूर्त्याख्यो द्विपंचाशत्कलायुतः ॥ ४ ॥ स्वाहा स्वधावषट्कारैरंकितो मेषवाहनः ॥
रक्तपद्मासनास्थितः ॥ ५ ॥ पिंगाक्षो लोहितग्रीवःकृष्णवर्त्मा हुताशनः ॥ ज्वालामालाव्रततनुः सप्तार्चिरमितद्युतिः॥
॥ ६ ॥ नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ॥ नमआवहवनीयाय महावेद्यो नमोनमः ॥ ७ ॥ नमस्ते सभ्य-
रूपाय नमो गृह्याग्निरूपिणे ॥ पंचाग्निरूपिणे तुभ्यं नमस्ते परमात्मने ॥ ८ ॥ महाराजैकराजाय नमस्ते भक्त
वत्सल ॥ काण्डद्वयोपघाताय ब्रह्मकर्मस्वरूपिणे ॥ ९ ॥ स्वर्गाय स्वर्गदात्रे च यज्ञेशाय नमोनमः ॥ नमोऽग्निहोत्र
रूपाय नमः परमेष्ठिरूपिणे ॥ १० ॥ चातुर्मास्यस्वरूपाय नमः पश्विष्ठिरूपिणे ॥ सौत्राम्णिने नमस्तुभ्य मग्नि-
ष्टोमाय वै नमः ॥ ११ ॥ अत्यग्निष्ठोमरूपाय तथा चोक्थ स्वरूपिणे ॥ नमः शोडशरूपाय वाजपेयाय वै नमः
॥ १२ ॥ अतिरात्र नमस्तुभ्य माप्तोर्याम नमोनमः ॥ नमोस्तु सर्व भूताना माधाराय महात्मने ॥ १३ ॥ ए-
कात्रि पंचभिर्वक्त्रो दीप्यमानपडात्मने ॥ नमःसमस्तदेवानां वृत्तिदाय सुवर्चसे ॥ १४ ॥ शक्ररूपाय जगता म-
शेषानां स्तुतिप्रद ॥ त्वंमुखं सर्वदेवानां त्वयात्तं भगवान् हविः ॥ १५ ॥ रुद्रतेजससमुद्भूतो वरदोहव्यवाहनः ॥

अग्निर्वैश्वानरः साक्षात् तस्मै नित्यं नमोनमः ॥ १६ ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सत्पते अग्नये अद्भ्यश्च नमम ॥ नालिकेरं होमयेत् इति पूर्णाहुतिः ॥ ततो वसोर्धारां जुहुयात् ॥ तत्र मंत्राः ॥

॥ ऋषिरुवाच ॥ १ ॥ शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दुरात्मनि सुरारिबले च देव्या ॥ तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या ॥ तामम्बिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नः॥ ३ ॥ यस्याः प्रभावमतुलंभगवाननन्तो ब्रह्माहरश्च न हि वक्तुमलं बलं च॥सा चण्डिकाऽखिलजगत्परिपालनाय नाशाय चाशुभभयस्य मतिं करोतु॥४॥या श्रीःस्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ॥ श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताःस्म परिपालय देवि विश्वम्॥५॥किं वर्णयाम तव रूपमचिन्त्यमेतत् किंचातिवीर्यमसुरक्षयकारी भूरि॥ किंचा हवेषु चारतानि तवातियानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥६॥ हेतुःसमस्तजगतां त्रिगुणाऽपि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा ॥ सर्वाश्रयाऽखिलमिदं जगदंशभूतमव्याकृताहि परमा प्रकृति-

---

आप्रमाणे पूर्णाहुति थयापछी वसोर्धारानो होम थवोजोइये पण तेम करतां नथी पूर्णाहुतिमां केवल नालिकेर लइ मंत्रोभणी स्रुचमां मुकी धीसाथे होमवुं अने वसोर्धारामां धीनीधारा अखंडित थवी जोइए जेनाथी कर्मकरवाबेसनारनुं जोडुंखंडित थतुं नथी एवाकार्यो श्रद्धा तथा उदारताथी करवाना छे ॥

स्वाहाऽसि वै
स्त्वमाद्या ॥ ७ ॥ यस्याः समस्तसुरता समुदीरणेन तृप्तिं प्रयाति सकलेषु मखेषु देवि ॥ स्वाहाऽसि वै
पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ८ ॥ या मुक्तिहेतुरविचिन्त्यमहाव्रता त्व मभ्यस्यसे
सुनियतेन्द्रियतत्त्वसारैः॥मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्याऽसि सा भगवती परमा हि देवि॥९॥ शब्दात्मिका
सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम्॥देवि त्रयी भगवती भवभावनाय वार्ता च सर्वजगतां परमा-
र्तिहन्त्री ॥१०॥ मेधाऽसि देवि विदिताखिलशास्त्रसारा दुर्गाऽसि दुर्गभवसागरनौरसंगा ॥ श्रीः कैटभारिहृदयैककृता-
धिवासा गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा॥११॥ईषत्सहासममलं परिपूर्णचन्द्रबिम्बानुकारि कनकोत्तमकान्तिकान्त-
म्॥अत्यद्भुतं प्रहृतमात्तरुषा तथाऽपि वक्त्रं विलोक्य सहसा महिषासुरेण॥१२॥ दृष्ट्वा तु देवि कुपितं भ्रुकुटीकराल-
मुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः ॥ प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीव्यते हि कुपितान्तकदर्शनेन
॥ १३ ॥ देवि प्रसीद परमा भवती भवाय सद्यो विनाशयसि कोपवती कुलानि ॥ विज्ञातमेतदधुनैव यदस्तमेत
न्नीतं बलं सुविपुलं महिषासुरस्य ॥ १४ ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्म-
वर्गः ॥ धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाऽभ्युदयदा भवती प्रसन्ना ॥ १५ ॥ धर्म्याणि देवि सक-

लानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति ॥ स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फल-
दा ननु देवि तेन ॥ १६ ॥ दुर्गे स्मृता हरसि भीतिमशेषजंतोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥
दारिद्र्यदुःखभयहारिणी का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १७ ॥ एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्वन्तु नाम नरकाय चिराय पापम् ॥ संग्राममृत्युमधिगम्य दिवं प्रयान्तु मत्वेति नूनमहितान्विनिहंसि देवि
॥ १८ ॥ दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोपि शस्त्रम् ॥ लोकान्प्रयान्तु रिपवोऽपि
हि शस्त्रपूता इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ १९ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकान्तिनिवहेन
दृशोऽसुराणाम् ॥ यन्नागता विलयमंशुमदिन्दुखण्डयोग्याननं तव विलोकयतां तदेतत् ॥ २० ॥ दुर्वृत्तवृत्तशमनं
तव देवि शीलं रूपं तथैतदविचिन्त्यमतुल्यमन्यैः ॥ वीर्यं च हन्तृहृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दया
त्वयेत्थम् ॥ २१ ॥ केनोपमा भवतु तेऽस्य पराक्रमस्य रूपं चशत्रुभयकार्यतिहारि कुत्र ॥ चित्ते कृपा समरनिष्ठुरता
च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेऽपि हत्वा ॥
नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते ॥ २३ ॥ शूलेन पाहि नो देवि पाहि खड्गेन

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २४ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥ यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ॥ २५ ॥ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ॥ करपल्लवसंगीनि तैरस्मान् रक्ष सर्वतः ॥ २६ ॥ ऋषिरुवाच ॥ २७ ॥ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नन्दनोद्भवैः ॥ अर्चिता जगतां धात्री तथा गन्धानुलेपनैः ॥ २८ ॥ भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता ॥ प्राह प्रसादसुमुखी समस्तान्प्रणतान् सुरान् ॥ २९ ॥ देव्युवाच ॥ ३० ॥ व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितम् ॥ ददाम्यहमतिप्रीत्या स्तवैरेभिः सुपूजिता ॥ ३१ ॥ देवाऊचुः ॥ ३२ ॥ भगवत्या कृतं सर्वं न किंचिदवशिष्यते ॥ यदयं निहतः शत्रुरस्माकं महिषासुरः ॥ ३३ ॥ यदि चापि वरो देयस्त्वयाऽस्माकं महेश्वरि ॥ संस्मृता संस्मृता त्वं नो हिंसेथाः परमापदः ॥ ३४ ॥ यश्च मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ॥ तस्य वित्तर्द्धिविभवैर्धनदारादिसंपदाम् ॥३५॥ वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥ ३६ ॥ ऋषिरुवाच ॥ ३७ ॥ इति प्रसादिता देवैर्जगतोऽर्थे तथाऽऽत्मनः ॥ तथेत्युक्त्वा भद्रकाली बभूवान्तर्हिता नृप ॥ ३८ ॥ इत्येतत्कथितं भूप संभूता सा यथा पुरा ॥ देवी

देवशरीरेभ्यो जगत्रयहितैपिणी॥४०॥ पुनश्च गौरीदेहात्सा समुद्भूता यथाऽभवत्॥ वधाय दुष्टदैत्यानां तथा शुम्भ-निशुम्भयोः ॥ ४१ ॥ रक्षणाय च लोकानां देवानामुपकारिणी ॥ तच्छृणुष्व मयाऽऽख्यातं यथावत्कथयामि ते ॥ ४२ ॥ इति शक्रादयस्तुतिभिः वसोर्धारां जुहुयात वा प्रधान देवसूक्तैर्जुहुयात ॥ इदं मृडाग्नये नमम इति॥ स्रुवोपरि पूगीफलं निधाय ॥ भोभोवन्हे महाशक्ते सर्वकर्म प्रसाधक ॥ कर्मांतरेपिसंप्राप्त सांनिध्यं कुरु सादरं ॥ नमः ॥ इति मंत्रेण होमयेत रुद्रकलश समिपे कुशे त्यागःस्थंडिलस्य ईशानकोणात स्रुवेण भस्मं गृहीत्वा ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलं ॥ तेजमायुष्य मारोग्यं देहि मे हव्यवाहन ॥ १ ॥ यथा शस्त्र प्रहाराणां कवचं भव सर्वदा ॥ एवं दैवोपघातानां शांतिर्भवति वारुणं ॥ २ ॥ इति मंत्रेण ललाटे ग्रीवायां दक्षिणांशे हृदि एतत्स्थाने भस्म धारणं कुर्यात ॥ ॥ हस्ते जलं गृहीत्वा ॥ आधारादि पूर्णाहुति पर्यंतं यद्यद्रव्यं यावद्यावत् संख्याकं यस्यै यस्यै देवतायै यावन्त्योयावन्त्याहुतयः सा सा देवताः प्रीयंतां ॥ संश्रव-

---

* अर्थ—पूर्णाहुति थइरह्यापछी सर्वामां थी लइ तेनापर सोपारी मूकी मंत्रथी होमवुं पछी रुद्रकलशपासे दर्भपर त्यागआपी कुंडना इशान कोणामांथी विभूती सर्वाने लइ सर्वाने पाणीछांटिने यजमानना कपालेकरी स्त्रियोना गंडस्थलअगाडिकरी सर्वो यजमानना पाटलाअगाडीमुकी यजमानपासे तेमां पाणी मुकाववुं.

प्राशनं ॥ पवित्राभ्यां मार्जनं ॥ अग्नौ पवित्र प्रतिपत्तिः ब्रह्मणे पूर्णपात्र दानं ॥ कृतस्य कर्मणः सागतासिध्य-
र्थं ब्रह्मन् इदं पूर्णपात्रं सदक्षिणाकं तुभ्यमहं संप्रददे ॥ प्रतिगृह्यतां इति यजमानः ॥ प्रतिगृह्णामि इति ब्राह्मणः
॥ प्रणीता विमोकः ॥ विमोकोदकेन यजमान मूर्धान मभिषिंचेत् ॥ मंत्रेण ॥ भगन्ते वरुणोराजा भगं सूर्यो
बृहस्पतिः ॥ भगमिंद्र श्च वायुश्च भगं सप्तर्षयो ददुः ॥ अमृताभिषेकोऽस्तु ॥ ततः श्रेयः संपादनम्॥ यजमान॰
हस्ते जलं गृहीत्वा ॥ अद्येत्यादि॰ कृतस्य कर्मणः सांगतासिध्यर्थं ब्राह्मणेभ्यः श्रेयोंगीकरण महं करिष्ये ॥
ब्राह्मणः उदङ्मुखोपविश्य ॥ जलं गृहीत्वा ॥ अद्येत्यादि॰कृतस्य कर्मणः सांगतासिध्यर्थं यजमानाय श्रेयोदानं
करिष्ये ॥ शिवा आपःसंतु ॥ संतु शिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तु सौमनस्यं ॥ अक्षतं चारिष्टं चास्तु ॥

अर्थ—पछीकुशाडी पूर्णररी ब्रह्माने पूर्णपात्रनी दक्षणाआपी प्रणीतानुं पाणीधोली तेनाथी यजमानने माथे छाटवु पछी यजमानने अभिशेक करवो. पछीश्रेय-
ग्रहणकरी ब्राह्मणोने दक्षणाआपवी.पश्चिमे ढोलवु—श्रेयलेवामा पेहेला ब्राह्मणपुजनकरी ब्राह्मणेपोताना हाथमापाणीतथासोपारी लइकेहेवुं के आजे तमारा कर्ममा
माराथी आरभी जेटला रत्विजोये जप होम पाठ विगेरे कर्याछे तेनुं फळ आजल तथासोपारी वडे तमनेसोपुंछु. एमकहीपाणीसोपारीयजमानना हाथमा आपवी.
पछीआचार्यादिब्राह्मणोने दक्षणाआपवी तेमाब्रह्मानेएकगोधो आपवोतथा आचार्यने गाय आपवीजोइये ते नहोयतो तेनीनिष्क्रयजेटलीदक्षणाआपवी. रत्विजोने
यथाशक्ति दक्षिणा आपवी दक्षणाथयापछीकासानापात्रमा घी भरी तेमा सुवर्णमुकी पोतानुमोडुंजोइ तेमाथी घी ग्रणवखत बहारकाढी ब्राह्मणोने तेपात्र आपवु—

अस्त्वक्षत मरिष्टंच ॥ गंधाःपांतु० ॥ अक्षताःपांतु० ॥ पुष्पाणि पांतु० ॥ यत्पापं रोगमशुभ मकल्याणं तद्दुरे प्रतिहतमस्तु ॥ यच्छ्रेय स्तदस्तु ॥ भवन्नियोगेन अस्मिकर्मणि यत्कृतं आचार्यत्वं यत्कृतं ब्रह्मत्वं तथा च एभिः ब्राह्मणैःसह यत्कृतो होमः ॥ यत्कृतो जपः ॥ आचार्यादयत्वात् होमाज्जपा द्यदुत्पन्नःश्रेयः ततअसुना साक्षतेन सजलेन पूगीफलेन तुभ्यमहं संप्रददे ॥ तेन श्रेयसा त्वं श्रेयोवान् भव ॥ भवामि इति यजमानः ॥ ततः आचार्यदीनां पूजनपूर्वक दक्षिणाप्रदानं करिष्ये ॥ कृतस्यक० इमां दक्षिणां तुभ्यमहं० अथ दानानि ॥ स्वर्ण गो भू तिलान्दद्यात् सर्व दोषापनुत्तये ॥ सवस्त्रं सहिरण्यं च पूजयेत् ब्रह्मणःसुतः ॥ आचार्याय गां ब्रह्मणे अनड्वाहं उक्तोक्तदानानि दत्वा ॥ ततोछायापात्र दानं ॥ कांस्यपात्रे सहिरण्यं घृतं पूरयित्वा ॥ सपत्नीकः छायां निरीक्षेत् ॥ आज्यंतेजःसमुद्दिष्ट माज्यं पापहरं परं ॥ आज्यं सुराणा माहार माज्ये लोकाः प्रतिष्ठिताः ॥ इदं छायापात्रं घृतपूरितं सूर्यदैवतं कृतस्य कर्मणः सांगतासिध्यर्थं सदक्षिणाकं कस्मैचित्ब्राह्मणाय दास्ये ॥ अथ पीठदानं ॥ कृतस्य० इमानि गणपत्यादिदेवानां पीठानि दास्यमानो-पस्करसहितानि गंधपुष्पाद्यर्चितानि आचार्याय दास्ये॥दानसां॥दक्षणांतु०॥ततः स्थापितदेवताकलशोदकं एकस्मि-

नूंपात्रे एकीकृत्य॥ दूर्वा पंचपल्लवैः उदङ्मुख आचार्यादयः सपत्नीकं यजमानं प्राङ्मुखमुपविष्टं अभिषिंचेयुः ॥ तत्र मंत्राः ॥ अभिषेके पत्नी वामतः ॥ शक्रादिदशदिक्पाला ब्रह्मेशाः केशवादयः॥आपस्ते घ्नंतु दौर्भाग्यं शांतिं ददतु सर्वदा ॥१॥ समुद्रा गिरयो नद्यो मुनयश्च पतिव्रताः ॥ दौर्भाग्यं घ्नंतु ते सर्वे शांतिं यच्छंतु सर्वदा ॥२॥ नासा ललाटकर्णभ्रू पदगुल्फोरुजंघास्य नितंबोदर मालिके ॥ स्तनोरौ बाहुहस्ताग्र ग्रीवायां सर्वसंधिषु ॥ ३ ॥ एतद्वै पावनं स्नानं सहस्राक्ष मृषि केशांते शुच्चयस्थितं ॥ तदापो घ्नंतु दौर्भाग्यं शांतिं यच्छंतु सर्वदा ॥४॥ पुनं त्विमां ॥ ५ ॥ एभिर्मंत्रैः अभिषेकं कुर्यात ॥ अभिषेकानंतरं स्मृतं ॥ ते नत्वा शत धारेण पावमान्यः वस्त्राणि आचार्याय दद्यात ॥ सपत्नीकः यजमानः स्नानं वा पादप्रक्षालनं कृत्वा उभयोः स्नानवस्त्रत्यागः ॥ कृतस्य० यथासंख्याकान् ब्राह्मणान् सुवासिः शुक्लमाल्यांबरधर धृतमंगलतिलकः स्वासने उपविश्य आचम्य ॥ कृतस्य० यथासंख्याकान् ब्राह्मणान् सुवासिः

(१) गदाधरः ॥ गर्भाधानादि संस्कारे ब्राह्मणान् भोजये द्दश ॥ शतंविवाहसंस्कारे पंचाशन्मेखला विधौ ॥ आवसथ्ये त्रयस्त्रिंशत

अर्थ—अभिषेककरतीवखते देवताओना कलशमांथी जळलइआंबानापातराथी यजमानपत्नीने यजमाननाडाबाहाथतरफबेसाडी जलछांटनुं तथाअभिषेकमांएक- वस्त्रधारणकरवानोविधिछे जेथीदंपतीनामन एकरहेछे ते वस्त्रब्राह्मणोनेआपवुं पछीसुवासिनीबटुकादीनो ब्राह्मणभोजननोसंकल्पकरी यजमानने तिलककरी आशिर्वाद आपवो तथादानसंकल्पमा गणपत्यादिदेवताओनीपीठनुंदान तथासुवर्ण गाय विगेरेना दानोनो संकल्पकरी प्रत्यक्ष अथवा निष्क्रयआपवो. पछीओछुंवधारे थयुं होय तेनी समाप्तीने माटे भूयसिनो संकल्प करी द्रव्य आपवुं.

नीः बटुकान् कुमारिकाः यथान्नेन अद्याहं वा यथाकाले भोजयिष्ये ॥ कृतस्य क०न्यूनातिरिक्त दोष परिहारार्थं नानागोत्रेभ्यः ब्राह्मणेभ्यः यथाशक्ति भूयसीं दास्ये ॥ आशिर्वादः स्वस्तियाचा० ब्रुवंतु नः ॥ १ ॥ स्वस्त्यस्तुते कुशलमस्तु चिरायु रस्तु गोवाजिहस्ति धनधान्य समृद्धि रस्तु॥ऐश्वर्यमस्तु बलमस्तु रिपु.क्षयोस्तु वंशे सदैवभवतां.हरिभक्ति रस्तु॥२॥यावत्तोयधरा धराधरधरा धाराधरा भूधरा यावच्चारु सुचारु चारु चमरं चामीकरं चामरं ॥ यावद्रागविराग राग रमणं रामायणं श्रूयतां तावत्त्वं खलुपुत्रपौत्रविवरं विष्णोःपद मासवान् ॥ ३ ॥ येनाक्षर समाम्नाय मधिगम्य महेश्वरात ॥ कृत्स्नंव्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ४ ॥ येनधौता गिरःपुंसां विमलैः शब्दवारिभिः ॥ तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५ ॥ रिपवःसंक्षयं यांति कल्याणं चोपपद्यते ॥ नंदते च कुलंपुंसां महात्म्यं मम श्रुण्वतां ॥६॥ वसुदेवसुतं देवं कंस चाणूर मर्दनम्॥ देवकी परमानंदं कृष्णं वंदे जगद्गुरुं ॥ ७ ॥ मंत्रार्थाः सफलाः संतु पूर्णाःसंतु मनोरथाः शत्रूणां बुद्धिनाशोस्तु मित्राणा मुदयस्तव ॥ ८ ॥

श्रौताधाने शतात्पर ॥ अष्टकभोजयेद्भक्त्या तत्तत् संस्कार सिद्धये ॥ आग्रायणे प्रायश्चित्ते ब्राह्मणान् दश पंच च ॥ इति ॥ बृहन्नारदीये ॥ १ ॥ विष्णवर्पितानि कर्माणि सफलानि भवंति हि ॥ अनर्पितानि कर्माणि भस्मनीव हुतंहविः ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यत्मोक्षसाधनम् ॥ विष्णोः समर्पितं सर्वं सात्विकं फलदं भवेत् ॥

मनसा चिंतितंकार्यं तत्सर्वं सफलं भवेत् ॥ आराध्यदेवाः प्रसन्नाः सन्तुः ॥ तथास्त्विति यजमानः ॥ विसर्जनं ॥
यांतुग्रहगणाःसर्वे स्वशक्त्यापूजिता मया ॥ इष्टकामप्रसिध्यर्थं पुनरागमनायच ॥ स्वस्थाने गच्छ ॥ अग्निं विस-
र्जनं ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयोदेवा स्तत्रगच्छ हुताशन ॥ गच्छत्वं भगवन्नग्ने
स्वस्थाने परमेश्वर॥हव्यमादाय देवेभ्यःशीघ्रं देव प्रसीद मे॥अद्येत्यादि०मया अद्यान्हि यथाशक्ति द्रव्यादिकेन यत्-
कृतं कर्म तत् कालहीनं भक्तिहीनं श्रद्धाहीनं ब्राह्मणानांवचनात् स्थापितदेवताप्रसादात् सर्वं परिपूर्णमस्तु॥ भो
ब्राह्मणाः सर्वपरिपूर्णमस्त्विति भवंतो ब्रुवन्तु ॥ २ ॥ अस्तु परिपूर्णे मिति द्विजाः ब्रूयुः ॥ इति त्रिः ॥ यस्य स्मृ-
त्या च नामोक्त्या तपोयज्ञ क्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्योवंदे तमच्युतं ॥ प्रमादात्कुर्वतांकर्म प्रच्यवेता
ध्वरेषु यत् ॥ स्मरणा देवतद्विष्णोः संपूर्णस्यादिति श्रुतिः॥विष्णवेनमो विष्णवे नमो विष्णवे नमः॥इतिश्रीजयानं-
दात्मज मूलशंकर शर्मणा विरचितायां विवाहकौमुद्यां ग्रहयज्ञप्रयोगः समाप्तः ॥

अर्थ-( १ ) अग्नि विसर्जन कराववुं तेमां एक पान लइ तेमां आखुं सोपारी एलची लवेंग मुकीमंत्र भणी होमवुं तथा नमस्कार करवो. अहींया
परणनारने जमणे हाथे मिंढल बांधी गल्युं मोढुं करावी घरमांजवानी रजा आपवी * पछी पुष्प अक्षत लइ देवोनी पासे रजा मांगी *तेमनुं विसर्जन
करवुं तथा मोढेथी त्रण वखत विष्णुनुं स्मर्ण करी नमस्कार करवा-पछी गोरे मोढेथी केंडुं-चांलो करवा चालो-ते व्यवहार करावी यजमानोने गोल

आपी गल्युं मोढुं करावी उठाडवा. पछी ते यजमानना घरनी पूज्य जेने मानता होय तेने ( महियारी केहे छे ) तेने पाटलापर रेशमी ककडो पाथरीने बे साडी यजमान पत्नी पासे तेना पग दूधथी धोवडावो पगे तथा हाथे कंकु करावी चांल्लो करावयो. पछी तेना हाथमां पान ( ९ ) तथा सोपारी (९) तथा दस आना-मुकावी हार पेहेरावयो तथा तेने चार वखत भातथी वधावी उठाडवी—पछी एक मटोडीनो घडो लावी तेमां ते महियारी पासे पाणीथी भरावी तेमां कंकुभात सोपारी पैसो लावी तेना उपर नारियल मुकी तेना पर ककडो रेशमी मुकी नाडु बांधी तेने कंकु करी त्यांथी घरमां लइ जइ गोत्रज पासे मुकाववो ए पण एक रुढी छे. आप्रमाणे ग्रहयज्ञनो प्रयोग कह्यो—हवे पछी विवाह संबंधी कार्यमां जे लग्न समयना पूर्वमां कर्तव्यकर्म तथा रिवाजो केटलाक होय छे ते रीवाज प्रमाणे अथवा लख्या प्रमाणे अनुकुल वखते करी लेवा ते कहुं छुं

अर्थ—ग्रहशांति थया पछी जेने घेर माता लाववानो रिवाज होयछे, तेणे माता लाववा. तेमां पासे ब्राह्मणनुं घर होय त्यां वैयराओए मलीनेजवुं. पछी. त्यां टोपलीमां रोपेला नवांकुरो होय. तेने पूजामां लइ गयला कुंकु भात चडाववा. तथा लइ गयला घउं नालीयर तेना घरनाने आपी मंगल गीत गाता घेर आववुं. पछी बारणा अगाडी उमारही घरवाला मांथी कोइ स्त्री तेना पगपर दूधरेडी तेना पग धोइ तेने कुंकु अरकाडी चांलोकरी चार वखत वधावे. पछी ते माताना माड लइ गोत्रज अगाडि मुकवा. पछी तेनी पूजाकरी ते काम समाप्त करवुं—माताने माटे थाल करवानी तेमां लापसी—रोटली—मग—चणा—दुधपाक—सेव—पापड तथा दीवडा—विगेरे करीने बे थाल पिरसी राखवी—पछी परणीने आवे वर कन्या पछी मातानी पूजा करी थाल—धराववी-ए रिवाज वरवालाने त्यांहां होय छे. तेम कोइने त्यांहा माता लाववानो हो तो पण नथी ग्रहशांति थया पछी छोकरानुं घर होय तो ते दीवसे मोसालथी मोसालुं आवेछे. ते कार्य करवुं. मोसालुं आवे के ते छाब लेनारी बेउ जणीने जेने घेर लइ जवुछे तेना घरमांथी कोइ पण स्त्री आवे ते आवी चांलो करी ने वखत भात तेना उपर वधावे— पछी छाबडी पोते लइ जाय. अने गंडपमा मुके. पछी कन्या अथवा जे परणनार होय, तेने बाजटपर बेसाडी, मोसालियामांथी चांलो करे पछी पोस भरे तेमां नारियल सोपारी पान मुके तथा रुपियो मुके पछी. छोकरो होय तो जोडा अबोटीयुं आंगी, अने दागीनो

एम केहेवाथी पेला मोसालिया तरफना आवेला लोकोमांथी जे होय ते तेना हाथमा मुके– पछी चार जणी वधावे. पछी गोरे चालो करवाने आवनो. पछी मोसाळानुं दापु जे होय ते आपी ए काम संपूर्ण करवुं– वेवारनो चालो करवो होय ते करी जाय. ए प्रमाणे बीजा पक्षवाला पासे पण करावचो. पछी मोसाळुं आवे तेमां पेहेलां कह्या प्रमाणे रीत करी कन्याने आपवामां चूडो– तेमज कन्यावाळानुं घर होय तो तेने घेर लग्नने दहाडे ग्रहशांति थइ रह्या पछी मोसाळुं आवे तेमां पेहेलां कह्या प्रमाणे रीतभात करी ए काम संपूर्ण करवुं– पछी कन्यावालाने कांकण– वाली– तोडा– अने पानेतर तथा दागीना जे मले ते लाव्या होय ते आपी उपर प्रमाणे रीतभात करी ए काम संपूर्ण करवुं– पछी कन्यावालाने (मायरानो रीवाज सुरत वीगेरे केटलाक गाममां छे) एने अंतरमंडप केहेछे तेमां एक निशा त्या मायरुं बंधाया पछी– तेमा–अथेवालो वटाववो. पूर्वपश्चिमने मोडे बेसाडवु तेमने वरमाल घाल्वी तथा कंकुना चांला करवा पछी शिला स्थंडिलपर मुकी– पूर्वपश्चिम पाटला गोठवी एक स्त्री पुरुषनुं जोडुं पूर्वपश्चिमने मोडे बेसाडवु तेमने वरमाल घाल्वी तथा कंकुना चांला करवा पछी शिला वचमां छे तेना पर भात काचु मुकी एक नारियल तेना पर मुकवुं ने बे जणने केहेवु के तमो गणपतीनुं स्मरण करी याटो ते वाटता जेनामा शक्ति होय ते नारियल लइ जाय. पछी वरमाला काढी लइ उंची मुकी छांडवी एने अथेवालो कहेछे. ए थयापछी कलवा मुकडी विगेरेनो रिवाज जे होय ते कन्यावाला तथा वरवाला करे पछी कन्यानुं घर होय तो ते थया पछी कन्याने सारा मगल द्रव्यथी कंकु दहीं, भात–आमला तेल हल्द विगेरेथी नवाईने बेसाडवी गोत्रज पासे तेने चूडो विगेरे सौभाग्यना द्रव्य पेरावी स्थापितदेवोनुं पुजन करावचुं तथा धांनो वाडको लइ तेमां रूपा नाणु मुकी मोढुं जोवाडी इष्ट स्मरण करता बेसाडवुं तेमज वरना घरनुं होयतो तेने पण स्नान करावी गोत्रजनी पूजा करावी घीमां मोढु जोवाडी चार स्त्रीयो मली पोस भरी तैयार कर्यापछी सगावहाला मित्रमंडल मइ एकठा थइ वाजित्र साथे इष्टनुं स्मरण करता घोडापर बेसी सेहेरमां फरतां कन्याने मंडपे जवुं पछी त्यां भइ घोडा परथी उतरी मंडपना बारणा अगाडी मुकेलो बाजट तेनापर पूर्वाभि अथवा उत्तराभि मुखे उभा रहेवुं. आशास्त्र तथा रुढीप्रमाणे प्रयोग कह्यो, पण एमां लईने पधारे आशयन आपना शास्त्र प्रमाणे करवुं जेनाथी पोतानुं तथा बीजानुं कर्म करवाथी कल्याण करी जयादि मेळवी अंते सारी गती सत् कर्मोथी मेळवेछे इति श्रीजयानंदात्मज मूलशंकर शर्मणा विरचितायां विवाहकौमुद्यां प्रथमग्रहयज्ञप्रयोगः॥ १ ॥

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ अथ विवाहकर्म प्रयोगः ॥ धर्मार्थकाममोक्षादि साधने भार्या-
यान्तरं गत्वा समावर्तनोन्तरं ब्रह्मचारिणा कन्यापाणिग्रहणं कर्तव्यं ॥ तत्र सामुद्रिकाद्युक्त बाह्य स्त्रीलक्षणा-
भिज्ञद्वारा वैधव्याभावपुत्रःप्रसूत्वादिसूचक प्रशस्तलक्षणवंती दौर्भाग्यादिसूचकदोपपरिहितामाभ्यन्तर
लक्षणसंपन्नां यत्नतः कन्यां परीक्षेत ॥ तत्र कन्यादोपाः ॥निर्गुणा शुष्कसंभाषी क्रोधयुक्ता सरोगिणी॥विपयोगा
वं॰ययोगा कुलविध्वंसयोगका ॥ १ ॥ दरिद्रजारयोगा च हीना चरण संयुता ॥ एतद्दोप दशैर्युक्ता तां कन्यां न
प्रतिग्रहेत् ॥ २॥ अथ कन्यागुणाः ॥ अव्यंगां दोपरहितां सुरूपां वयपूर्विकां ॥ सुवर्णां सुकुलोत्पन्नां शुभलक्षण
संयुतां ॥ १ ॥ प्रतिगृण्हीत तां कन्यां कुलसंतानवर्धिनीम् ॥ इति कात्यायनः ॥ अथ वरदोपाः ॥ मूकांधो

आभ्यंतराणि त्वष्टौपिंडान्कृत्वेत्याश्वलायनोक्त विधिना वेदितव्यानि ॥ यथा ॥ पूर्वस्या रात्रौ गोष्ठवेदिकांकित स्थानहृद रणक्षेत्र चतु-
ष्पथ स्मशानेभ्यो मृत्तिकां गृहित्वापिंडाष्टकं कर्तव्यं ॥ तत्रानुक्रमेण प्रथमेपिंडेस्पृष्टे धान्यवती भवति ॥ द्वितीये पशुमती ॥ तृतीयेग्निहोत्रपरा ॥
चतुर्थे विवेकिनी चतुरा सर्वजनार्जन पराभवति ॥ पंचमे रोगिणी ॥ पष्ठेवंध्या ॥ सप्तमे व्यभिचारिणी ॥ अष्टमेविधवा भवेदिति ॥

प्रथम विद्याभ्यास थया पछी ज्योतिशास्त्रोना नियमो प्रमाणे सामुद्रादिक चिन्हो जोई सारा सौभाग्यादि पुत्र प्रसुतादिक योगो वाळी कन्या जोवी तेमां
केटलाक पिताना माताना परपराथी प्राप्त थयला दोपो पर विचार करवो. तेमा जोवालायक दोपो—बुद्धिवगरनी, बोवडी, क्रोधवाली, वंध्यत्व योगवाली, कुलनाश-

बधिरः कुब्जः स्तब्धः पंगुर्नपुंसकः ॥ कुष्ठी रोगी ह्यपस्मार दशदोषाः प्रकीर्तिताः ॥ १ ॥ च परं ॥ आचारहीनो मूर्खश्च कुरूपश्चौरजारकः ॥ पाखंडी च तथोन्मत्तो मूहकः कुलदोपकः ॥ २ ॥ द्यूतकर्म रतश्चैव दशदोषाः प्रकीर्तिताः ॥ तद्दोपप्रयुक्ता ये तेषु कन्या न दीयते ॥३॥ अथ वरगुणाः ॥ यमः ॥ कुलं च शीलं च वयश्च रूपं विद्या च वित्तं च सनाथतां च ॥ एतान् गुणान्सुपरीक्ष्य देया कन्या बुधैः शेपमचिंतनीयम् ॥१॥ शाकटायनः ॥ चतुर्थीमुद्वहेत्कन्यां चतुर्थः पंचमो वरः ॥ पराशरमते षष्ठी पंचमो न तु पंचमीम् ॥ २ ॥ एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ॥ न पुत्री द्वयमेकस्मै प्रदद्यात्तु कदाचन ॥३ ॥ एकोदर्योः करतलग्रहणं यदिस्या देकोदरस्थ वरयोःकुलनाशनं च ॥ एकाब्दिके हि विधवा भवतीह कन्यां नद्यंतरेऽपि शुभदं पृथुशैलरोधे ॥ ४ ॥ नद्यन्तरेण शैलान्तरं देशो लक्ष्यते॥तथा च वसिष्ठ स्मृतिः॥व्यवधानं महानद्या गिरिर्वा व्यवधायकः ॥ वाचो यत्र विभिद्यंते तद्देशान्तरमुच्यते ॥ ५ ॥ एकमातृप्रसूतानां एकस्मिन्वत्सरे यदि ॥ विवाहं नैव कुर्वंति वदन्ति मुनयो यथा ॥६॥

करनारी, दरिद्र,जार,तथा टुंका पगवाली,तावे करीने शरीर जेनुं बळवगरनुं छे ते दोषो विगेरेने जोई लेवी, गुणवाली कन्याना लक्षण -सारा कुळवाली, रूप तथा गुणो विगेरे लक्षणवाली तथा प्रसन्नवाना चिन्हवाली तेने शुभ कहेछे एवी कन्या लेवी. ए प्रमाणे वरना दोषो -बेरो,(मुगो)पागलो,नपुंसक, लंगडो,कुष्टि विगेरे रोगवाळो,मूर्ख,आचारवगरनो,नीच कर्म करनारो,पाखंडी, जुगारी, विगेरे ) जोवाना छे,तेम सामान्य गुणो कुळस्वभाव, धैर्य,रूप, विद्या, धन,सगावहाला

विवाहस्त्वेकजन्याना मेकस्मिन्नुदये कुले ॥ नाशंकरोत्येकवर्षे स्यादेकविधवा यतः ॥७॥ इति संहितासारावल्यां ॥ विवाहस्त्वेकजन्याना मेकस्मिन्नुदये कुले ॥ नाशंकरोत्येकवर्षे स्यादेकविधवा यतः ॥७॥ इति संहितासारावल्यां

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ॥ तयोश्चंद्रबलं श्रेष्ठ मितिगर्गेण भाषितं ॥ १ ॥ मनुना ॥ वैवाहिको विधिःस्त्रीणा मौपनायनिक स्मृतः॥पतिसेवा गुरौ वासो गृहस्थाग्नि परिक्रियेति ॥ स्त्रीणां विवाहएवोपनयनं द्वि-जन्मन्यापादानपरं ॥ न मुण्डनं मण्डनतोऽपिकुर्या दिति निषेधात् ॥ गार्ग्यः॥नांदीश्राद्धे कृते पश्चा द्यावन्मातृवि-सर्जनम् ॥ दर्श श्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥१ ॥ अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च ॥ ब्रह्म-यज्ञाचाध्ययनं नदीसीम्नोश्चलंघनम् ॥ २ ॥ उपवासव्रतं चैव श्राद्धभोजनमेव च ॥ नैव कुर्युः सपिण्डाश्च मंडपोद्वासनावधीति ॥३॥ विवाहव्रतचूडासु वर्षमर्धतदर्धकम् ॥ पिण्डान् सपिण्डा नो दद्युःप्रेतपिंडविनानरेति ॥ ४ ॥ स्मृत्यंतरे ॥ पुत्रोद्वाहान्नैवपुत्रीविवाहोऽपि ऋतुत्रये ॥ अब्दान्तरान्मुण्डनं च नैकदा मुण्डनद्वयं ॥ तत्र सायणीये ॥ एकस्मिन् शोभने वृत्ते विशुभं नैव कारयेत् ॥ यदि कुर्यात् प्रमादेन तत्र नस्याच्छुभं ध्रुवम् ॥ बृह-



---

विगेरे जोई कन्या आपवी. हवे चोथी पेढी साथे पांचमी पेढीनो वर जोईये, तेम पांचमी साथे चोथो जोईये पण चोथे चोथो, पांचमे पांचमो संबंध होय तो नहिं परणाववो. बे बेहेनो एकज घरमां एक मातृजन्योनी साथे आपवाथी विधवादि दोषो पामे छे.तेमज बे छोकरांनां लग्न एके दिवसे करवां नहि. छोकरीने

स्यातिः ॥यस्याःक्रियायाः संप्राप्तः कालोमासैर्दिनैरपि ॥ न तत्र मौढ्यदोषोस्ति अस्तो वा गुरुशुक्रयो रीति॥व्रतयज्ञ विवाहेषु श्राद्धे होमार्चने जपे ॥ प्रारंभे सूतकं न स्यादनारंभे तु सूतकं ॥ प्रारंभोवरणं यज्ञे संकल्प व्रतसत्रयोः ॥ नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ वधूवरान्यतरयोर्जननी चेद्रजस्वला ॥ तस्याःशुद्धेः परकार्यं मांगल्यं मनुरब्रवीत् ॥ अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ॥ श्रीयं संपूज्य तत्कुर्याद्भ्रूणहत्याभयंकरिम् ॥ सूतिकोद-क्ययोःशुद्ध्यै गां दद्याद्धोमपूर्वकम् ॥ प्राप्तेकर्माणिशुद्धिःस्यादितरस्मिन्नशुद्ध्यति ॥ एकविंशत्यहर्यज्ञे विवाहेदशवा-सराः ॥ त्रिषट्चौलोपनयने नांदीश्राद्धं विधीयते ॥ विवाहविहिते तंत्रेहोमकालमुपस्थिते ॥ कन्यामृतुमतीं दृष्ट्वा कथं कुर्वंति याज्ञिकाः॥स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ॥ युंजानाज्याहुतिंहुत्वा ततः कर्माणि योज येत् ॥ वधूवरमातृरजप्राप्तौ नांदीश्राद्धोत्तरं मुहूर्तान्तरालाभे संकटे श्रीशांतिं कृत्वा कर्म मारभेत् ॥ गुरुबलविचारः॥ रजस्वलायाः कन्याया गुरुशुद्धिं न चिंतयेत् ॥ अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रीगुणार्चनात् ॥ अर्के गुर्वोर्बलंगौर्या

गुरुनुं बल तथा छोकराने रविनुं बल जोई विवाह करवो, तेमज लग्न थया पछी मुंडन करवुं नहिं तेमज नांदीश्राद्ध थया पछी मातानुं विसर्जन थाय त्यांसुधी व्रतयज्ञ सीमोल्लंघन उपवास, व्रत, श्राद्ध, भोजन, विगेरे त्याग करवा, विवाह तथा मुंडन अथवा जनोइ थया पछी सपिंडियोए प्रेतपिंड शिवाय ६ महिना

रोहिण्यर्क बलास्मृता ॥ कन्याचंद्रबलं प्रोक्ता वृषली लग्नतोबला ॥ अष्टवर्षाभवेद्गौरी नववर्षा च रोहिणी ॥ दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला॥ कमलाकरेः॥ब्रह्मार्षदैव, प्राज्यपत्य गंधर्वासुर राक्षस पैशाचाष्टौ विवाहः ॥ माध-वीये नारदः ॥ पितादद्यात् स्वयं कन्यां भ्राता वानुमते पितुः ॥ मातामहो मातुलश्च सकुल्यो जननी तथा ॥ मातात्वभावे सर्वेषां प्रकृतौ यदिवर्तते ॥ तस्यामप्रकृतिस्थायां कन्यां दद्युःस्वजातयः ॥ संवर्तः ॥ अलंकृत्य तु यः कन्यां भूषणाच्छादनादिभिः ॥ दत्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥ सर्वत्र प्राङ्मुखो दाता प्रतिग्राही उदङ्मुखः ॥ एषएव विधिर्यत्र कन्यादाने विपर्ययः ॥ इति ऋष्यशृंगः॥हस्तोच्छाया वेदहस्तैः समंतात् तुल्याः वेदी सद्मतो वामभागे ॥ विवाहे कन्या हस्तेनैव वेदिनिर्माण मिति मुहूर्तचिंतामणौ ॥ कन्याहस्तैः पंचभि सप्तभिर्वा वेदिं कुर्यात् मंदिरे वामभागे ॥ तां शूद्रोनोपलिंपेत् नवंध्याविधवास्त्रियां इति गृह्यसंग्रहे ॥ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृण्हीयात् ॥ विवाहशुद्धिं प्रवदंति सन्तो वात्स्यादयस्त्री जनिजन्ममासा

सुधी श्राद्धादिनो त्याग करवो हवे जेनो काल प्राप्त थयोछे तेने माटे गुरु शुक्रास्तादिनो दोष न जोता ते करवामा प्रायश्चित नथी. व्रतहोम यज्ञविवाह— श्राद्ध पूजनादिनो आरंभ थया पछी सूतकादिनो दोष लागतो नथी आरंभना पूर्वमा प्राप्त थाय तो करवु नहीं,प्रारंभना नियमो यज्ञमा वरण थया पछी व्रत अने

दिति ॥ अत्रवधुवरयोर्घटिकादिविचारोयरुत्वलादिकं पृण्याहादिविनिर्णयो लग्नशुद्धिश्चेत्यादि ज्योतिःशास्त्रे ज्ञेयं॥ विस्तरभया न्नात्र लिखितं ॥ इति शास्त्रार्थः ॥ अथ विवाहः ॥ वरःकृतनित्यक्रियो विधिवत् कृतस्वस्ति वाचनो ब्राह्मणैः सह सात्विकाहारं भुक्त्वा इशद्धौतं नवं श्वेतं सदृशं परेणाधृतं वस्त्रयुगलं परिधाय स्वेष्टदेवता पित्रादीन्नमस्कृत्य तैरनुमोदितो यथाविभवमश्वादियान मारुह्य धृताशितच्छत्रः स्वावित्तैर्ज्ञातिबांधवैः ॥ स्वास्तिर्यचेति सुमंगल सूक्तानपठन् पैरैर्ब्राह्मणैःपुरंध्रीभिःपूर्णकलशोदकपात्रं कन्यापुष्पाक्षत दीपमालाध्वज लाजैर्मंगलतूर्यघोषैश्च सह वधूगृहंगत्वा तत्र द्वारदेशे प्राङ्मुखस्थित नीराजनपूर्णकुंभयुतैः स्त्रीपुरुषैः प्रत्युद्यातो नीराजितस्तन्मण्डपवहिर्द्वारि तिष्ठेत् ॥ कन्या जननीगृहद्वारिसमागतं वरमाचारात्तिलकादिभिर्यथाचारं संपूज्य ॥ तमग्रतः कृत्वा हंणस्थाने नयेत तत्राहंणीयोर्हणस्थानन्यस्तोदगग्रासनात् पश्चिमतः निर्मितासने उपविशेत्॥ **अथकर्मारंभः॥** सुमुहूर्ते कन्यापिता वरपिता च शुभासने उपविशतां॥द्विजःयजमानभाले तिलकंकुर्यात्॥ स्वास्तियाचा० आचम्य

---

लग्नमा संकल्प थया पछी विवाहमा नादी तथा श्राद्धमा रसोइ थया पछी विघ्न आवे तो तेने दोष गणवो नहीं तथा कन्यानी माने रजोदर्शन थाय तो तेनी शुद्धि पछी लग्न कार्य करवु—पछी मुहूर्त न मळे एम होय तो बीजा शास्त्रोना प्रमाण जोवाडी करवुं नांदीश्राद्ध केटला दिवस पेहेला करवु. यज्ञमा दिवस

प्राणानायम्य ॥ शांतिपाठं पठेयुः ॥ गणाधिपं नमस्कृत्य नमस्कृत्य पितामहं॥ विष्णुं रुद्रं शिवालक्ष्मीं वंदे भक्त्या सरस्वतीं ॥ १ ॥ स्थानं क्षेत्रं नमस्कृत्य दीननाथं निशाकरं ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिं ॥ २ ॥ दैत्याचार्यं नमस्कृत्यछायापुत्रं तथैव च ॥ राहुं केतुं नमस्कृत्य पूजारंभे विशेषतः ॥ ३ ॥ शक्रादिदेवताः सर्वा नमस्कृप्य मुनिं ततः ॥ गर्गमुनिं नमस्कृत्य नारदं मुनिसत्तमं ॥४ ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलं ॥ व्यासं कण्वं हृषिकेशं देवलं गौतमं कृपं ॥ ५ ॥ अगस्त्यं च पुलस्त्यं च दक्षपुत्रं पराशरं ॥ विद्याधिकान् मुनीन् सर्वान्नाचार्यांश्च तपोधनान् ॥ ६ ॥ तान्सर्वान्प्रणमामद्य रक्षंतु मे ममाध्वरं ॥ अन्ये विद्यास्तपोयुक्ता वेदशास्त्र विचक्षणाः ॥ इति शांतिपाठः ॥ ॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्योनमः ॥ परमगुरुभ्यो नमः ॥ परात्परगुरु-भ्योनमः ॥ इष्टदेवतायैनमः॥कुलदेवतायै नमः ॥ ग्रामदेवतायै नमः॥ शचिपुरंदराभ्यां नमः ॥ सर्वेभ्योदेवेभ्यो नमः ॥ सर्वेभ्योब्राह्मणेभ्योनमः ॥ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विना-

( २१ ) विवाहमा दिवस ( १० ) मुंडन तथा जनोइमा दिवस ( ३ ) अथवा ( ६ ) दिवस पेहेला करवु. गौरी कन्याने सूर्य गुरुनुं बल जोवुं. रोहिणीने सूर्यनुं बळ तेम कन्याने चंद्रनुं बल जोवुं पण त्यारपछीनीने केवल लग्न शुद्धि जोईने ज लग्न करी नाखवा. विवाह आठ प्रकारनो छे तेमा एकेकथी

यकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा॥संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजं ॥ प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशांतये ॥ ४ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदियस्थो जनार्दनः ॥५॥ अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतयेनमः ॥ ६ ॥ वक्रतुंड महाकाय सूर्यकोटि समप्रभ ॥ निर्विघ्नं कुरु मे देवसर्वकार्येषु सिद्धिद ॥ ७ ॥ सर्वदा सर्वकार्येषु नास्तितेषाममंगलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनं हरिः ॥ ८ ॥ तदेवलग्नं सुदिनंतदेव तारावलं चंद्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपतेर्तेंघ्रियुगं स्मरामि ॥ ९ ॥ यत्रयोगीश्वरः कृष्णो यत्रपार्थोधनुर्धरः ॥ तत्रश्री र्विजयो भूति र्ध्रुवा नीतिर्मतिर्मम ॥ १० ॥ सर्वेष्वारंभकार्येषु

---

एकेक उतरतो छे.ब्रह्म,आर्ष,दैव, गांधर्व, प्राजापत्य, आसुर,राक्षस,पैशाच एवा आठ प्रकारना विवाहमांथी पूर्वना चार विवाह सारा कहेवाय छे. तेवी रीते कन्यादानना आपनारा पण अनुक्रमे उतरता होय छे. ते पिता ते ना होय तो भाइ, पिताना पिता,अने माना बाप,मामा अथवा माता अथवा कुलमांथी कोई ते न होय तो अथवा बीजी न्यातवाळा कोइ पण मनुष्ये कन्याने सौभाग्यनी वस्तुओ आपी अलंकृत करी कन्यादान करेछे तेने स्वर्ग प्राप्त थइ दरेक प्रका-

जनार्दनः ॥ साक्षत जलमादाय ॥ विष्णु

त्रयांस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशान जनार्दनः ॥ साक्षत जलमादाय ॥ विष्णु
त्रयांस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशान
विष्णु विष्णुः श्रीमद्भगवतो महा पुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्यब्रह्मणो द्वितीयपरार्धे श्री-
श्वेत वाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे प्रथमचरणे भूर्लोके भरतखंडे जंबूद्वीपे दंडकारण्ये
नर्मदातपत्योः दक्षिणतटे बौद्धावतारे शालिवाहनशके संवत आपाढादि अमुकामुकाधिकेऽब्दे अमुक
संवत्सरे अमुकायने अमुकऋतौ मासोत्तमेमासे अमुकमासे अमुक पक्षे अमुक तिथौ अमुक वासरे नक्षत्रे
चंद्रे सूर्ये लग्ने गुरौ च शेषेषुग्रहेषु यथायथा राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषण विशिष्टायां शुभ-
पुण्यतिथौ करिष्यमाणविवाहांगभूतं वाग्दान महं करिष्ये ॥ इति कन्यापितुः ॥ वरपिता ॥ करिष्यमाण विवा-
हांगभूतं कन्या निरीक्षणं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशार्चनं गणपतिपूजनं वरुणपूजनं च करिष्ये ॥

रनां ते सुखो भोगवे छे,दरेक कर्ममां दान आपनारो पूर्वने मोढे बेसे अने लेनारो उत्तरने मोढे बेसे पण कन्यादान वखते दाताये उत्तरने मोढे तथा लेनारे पूर्वने
मोढे बेसी लेवुं. विवाहमां कन्याना हाथना प्रमाणथी वेदी करवी ते थती नथी तेनी ठेकाणे ( मायरु ) करेछे,एने अंतरमंडप कहेछे. ए पांच हाथ अथवा
सात हाथनी लंबाइथी करवुं तथा चार हाथ पोलाइथी करवुं तथा घरनी डाबी बाजु तरफ करवुं, रुढीथी घरना बारणानी सामुं करेछे, उत्तरायणमां ज्योति-

इत्युभौ कृत्वा ॥ वामहस्ते सर्षपान् गृहीत्वा ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः॥ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशं ॥ सर्वेषामविरोधेन पूजाकर्म समारभेत् ॥२॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा॥स्थानं त्यक्त्वा तु यत्सर्वं यत्रस्थं तत्र गच्छतु ॥३॥ भूतानि राक्षसावापि येऽत्र तिष्ठंति केचन॥ ते सर्वे ष्यपगच्छन्तु देवपूजां करोम्यहम्॥४॥सर्वस्यां दिशि सर्षपान्विकीरयेत् ॥ वामपादपार्ष्णिना भूमौ घातत्रयं कृत्वा ॥ उदकस्पर्शः ॥ स्ववामे अक्षतपुंजोपरि कलशं संस्थाप्य ॥ तत्र तीर्थान्यावाह्य ॥ सर्वे समुद्रा सरितस्तीर्थानि जलदानदाः ॥ आयान्तु ममशांत्यर्थं दुरितक्षयकारकाः ॥ १ ॥ गंगे च यमुनेचैव गोदावरी सरस्वती॥नर्मदे सिंधुकावेरी जलेऽस्मिन् सन्निधिंकुरु ॥२॥ ब्रह्माण्डोदरतीर्थानि करैःस्पृष्टानि तेरवे ॥तेन सत्येन मेदेव तीर्थं देहि दिवाकर॥३॥इति मंत्रेण तीर्थान्यावाह्य॥हस्ते अक्षतान् गृहीत्वा ॥ अस्मिन्कलशे सांगंसपरिवारंसायुधं सशक्तिकं पूजार्थेवरुणमावाहयामि॥पूजयामि॥वरुणायनमः॥गंधंसमर्पयामि॥वरुणा-

---

शास्त्रादिये प्रमाण करेला दिवसे कुमारीनुं पाणीग्रहण कराववुं तेमज लग्नसमये घटिकादिनुं स्थापन करी शुद्ध लग्न जोइ राखवुं, यजमानोना गोत्र शाखादिनुं समयानुसार निश्चित न होवाथी तेमज पराशर तथा शतपथ श्रुतिना प्रमाणथी सघळी प्रजाकाश्यपीय छे माटे काश्यपगोत्र यजमानोनुं छे. हेमादि ग्रंथनुं

य० पुष्पं०वरुणाय०धूपं स०वरुणाय०दीपं०वरुणाय०नैवेद्यं० पुष्पं गृहीत्वा ॥ एह्येहि यादोगणवारिधीनां गणेनपर्ज्य
न्यसहाप्सरोभिः॥विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान् भगवन्नमस्ते॥वरुणायनमः ॥ प्रार्थनापूर्वकं नमस्कारं
समर्पयामि ॥ अनेन पूजनेन सांगःसपरिवारः वरुणः प्रीयतां ॥ गणपतिपूजनं ॥ हस्ते अक्षतान् गृहीत्वा ॥
आवाहयामि विघ्नेशं सुरराजार्चितेश्वरं ॥ अनाथनाथसर्वज्ञं पूजार्थं गणनायकं ॥ विघ्नहर्तारं गणेशं सांगं
सपरिवारं सायुधं सशक्तिकं आवाहयामि ॥ प्रतिष्ठासर्वदेवानां मित्रावरुणनिर्मिता प्रतिष्ठांतांकरोम्यत्र मंडले
दैवतैःसह ॥ गणेशःसुप्रतिष्ठितो वरदोभव ॥ प्रतिष्ठांते पूजनं ॥ सपरिवाराय गणेशाय नमः आसनं०सपरिवारा-
य गणेशाय नमः॥पादयोःपाद्यं स०सपरि०गणेशाय०अर्घ्यं स०सपरिवा०गणे०अर्घ्यान्तेआचमनीयं स० ॥सपरि०
गणेशाय स्नानं स०॥सपरि०गणेशाय०वस्त्रं स०सपरि०गणेशाय०यज्ञोपवीतं स०॥सपरि०गणेशाय० चंदनं स०
सपरि०गणेशाय०अलंकारार्थे अक्षतान् स०सपरि०गणेशाय०पुष्पं स०सपरि०गणेशाय०सुशोभनार्थे सौभाग्यद्रव्यं

---

पण एमज कहेवु छे. गोत्रनो नाश थवाथी काश्यप गोत्र ग्रहण करवुं. माटे त्रीजा गोत्रनो उच्चार न करतां काश्यपगोत्र सप्रमाण ग्रहण करवुं वली कन्या-
ना देहना प्रमाणे करीने सतर भरवं तथा तेनी सत्तावीस तारनी दिवेट करवी अने ते कोडियामां मुकी तेल पूरी दीवो करवो एम छे, पण अत्रास्थी

स०॥ सपरि० गणेशाय० प्रसन्नार्थे दूर्वांकुरान्स० ॥ सपरि०गणेशाय०धूपंस०॥ सपरि०गणेशाय०दीपंस०॥सपरि० गणेशाय० नैवेद्यंस०॥सपरि० गणेशाय० तांबूलंस०॥ साद्गुण्यार्थे दक्षिणांस० सपरि० गणेशाय० प्रदक्षिणांस० ॥ अंजलौ पुष्पाण्यादाय ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुति-

कन्यादेहप्रमाणेन सप्तविंशतितंतुभिः ॥ कृतवर्तिकयादीपं प्रज्वाल्य तैलपूरित ॥ इति भास्करे ॥

---

लोटनो दीवडो करी तेमा घी पूरी सलगावे छे तेने रतनदीवडो कहेछे तेमज कन्याना देहना प्रमाणथी लाल सुतर भरवु तेना चोवीस तार तेना देहना प्रमाणे भरीने तेनी वरमाला करवी अने ते वरमाला वरनी कोटमा नाखवी. कन्यादान आपनार तथा ग्रहण करनार बेउ जणा सुमुहूर्त जोइ आसन पाथरी पाटलापर बेसे पछी ते बेउना कपाले कुकुमनो तिलक करी भात चोंडी आचमन प्राणायाम करावी शांतिपाठना मंत्रो भणवा. पछी गणपति गुरुनु स्मरण करी गणपति पूजा भणवी. हवे मडपने द्वारे आवी उभेलो वर तेने शास्त्र तथा आचारपूर्वक अंतरमडपमा लेवो. तेमा पहेलाथी पोताना घरमा गोत्रज अगाडी बेठेली कन्या तेना हाथ कुंकुवाला करी तथा एकहार हाथमा आपी कन्याना मामाए पण पीतांबर पहेरी कन्याने पोताना हाथेथी उचकी मडपमा जवुं ते वखते गोरे हाथमा झारी लइ तेनापर नारियल ढाकी तेनी अगाडी चालना जवुं. ते समये कोइ पण विधवा अथवा अमंगल वस्तु सामु लाववी नहीं पछी मडपना बारणा अगाडी उभा रहीने कन्यापासे चार प्रदक्षिणा करावयी तथा चाल्हो करावी हार पेहेरावी कन्याने पाछी मोकलवी ए शास्त्रसमत छे—पण ए ठेकाणे कन्यानो मामो ते कन्याने लेइने चार प्रदक्षिणा करेछे तथा

यज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय

विवाहे परिणयने चूडाकरणे क्षौरकर्मणि उपनयने मेखलाबंधने केशांते गोदान कर्माणि सीमंतोन्नयने गर्भसंस्कार एतानि च विवाहादीनि कर्माणि शालायां मंडपे एव कार्याणि ॥ न बहिः कुर्यात् इति कात्यायनः ॥

मगल भगवान् विष्णोर्मंगल गरुडध्वज ॥ मगल पुण्डरीकाक्ष मगलायतनं हरिः ॥ ए मंत्र भणी गोर तेनी अगाडी प्रदक्षिणा करेछे अने मोडे बोलता जायछे पछी ते छोकरीने हाथे चाह्लो कंकुनो करावी पछी हाथमानो हार पेहेरावी देछे. चार प्रदक्षिणा थया पछी कन्यानो मामो ते छोकरीने लइने सामु उभो रहेछे. तेवखते अंतरपटनो ककडो झाली राखेलो होयछे. तेना उपर पडे एवीरीते राखेछे पछी ते पछी मोडामा चावेलुं पान तेनी पिचकारी वरना उपर मारेछे. पछी गोरे जे पोंकनारी होय तेने साथे लइ तेना हाथमा एक पात्र आपी तेमां (पोंकणा) तथा कुंकुनो दडीयो कन्याने घरमा तेनो मामो पाछो लइ जायछे. तथा पाणिनी लोटी (तथा संपट) एटले कोडियुं एक लइ तेमां कुंकु मात मुकी तेना उपर तथा मातनो दडीयो इडी पींडी (घउना लोटना चार मुठीया) एटले जुवारना डीडवाना मूछ एटली वस्तु लइ पोंकनारीने बीजु कोडियुं ढांकी तेना उपर नाडुं बांधीने मुकवुं तेने संपट कहेछे ते मुकी तथा (सराइया) चोडी हाथमां रुमाल लइ तेनी साथे पोंकणामांथी जुंसरी लइ तेना लइ जवी, ए पण बधो आचारछे.पछी परणनारने कपाले पेहेलाथी चाह्लो करवो.—पछी मात (मुसल) लइ—त्राक—संपट ए अनुक्रमे नाक साथे एक वखत तथा पोताना नाक साथे एक वखत एम चार वखत अरकाडी करवुं. ए प्रमाणे थया पछी

नमस्तुभ्यं विनायक ॥४॥ त्वां विघ्नशत्रुदलनेति च सुंदरेतिभक्तप्रियेति सुखदेति फलप्रदेति ॥ विद्याप्रदेत्यघहरे ति च ये स्तुवंति तेभ्यो गणेश वरदो भव नित्यमेव ॥ ५ ॥ सपरि॰गणेशाय॰मंत्रपुष्पांजलिं स॰ ॥ विशेषार्घः ॥ रक्षरक्षगणाध्यक्ष रक्षत्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राताभव भवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिंधो

करतुं तेमां संपट उतारी जमणा पग अगाडी मुकवुं. पछी इढोंणी तेना उपरथी उतारी नाखी देवी तथा पाणीनो लोटो उतारी रेडी देवी तेम सराया पण उतारी भांगीने फेंकी देवां. पछी वरना हाथमांनी पोस पोंकनारीना खोळामा अपाववी. जरा हाथे हाथ अरकाडवो तथा वरे पग अगाडी मुकेलुं संपट पोतानो जमणो पग मुकी फोडी नाखवुं. पछी मायरामा पूर्वाभि मोडे जइ आसन पर बेसवु. पछी पोंकनारीये वर तरफना आवेलां बयराओने झारीमांथी पाणी आपवुं एने आचमन करेछे—पछी कन्या पधराववानो विधि करवो—तेमा ज्योतिशास्त्रना नियम प्रमाणे घटिकानुं स्थापन कर्युं होय तो तेना वखत प्रमाणे कामनो आरंभ करवो नहि तो जेटला वखतनुं मुहूर्त होय ते प्रमाणे जोइने मंगलाचरणना श्लोको साठीनामना पुस्तकमांथी भणवा तथा कन्या घरमां होय तेने तेनो मामो फरी उंचकीने लावे ने वरना सामु पश्चिमनु मोडु करी बेसाडे. पछी ब्राह्मणोये वरमाला बेउनी पासे झाली राखवी तथा अंतरपटनुं वस्त्र बेउनी मध्यमां झाली राखवुं तथा रतन दीवडो लावी मुकवो. तथा कासानी थाली तथा वेलण जोशीना हाथमां आपवुं ए प्रमाणे थया पछी घटिकानो समय पूर्णनो थवाथी वरना हाथमां कन्यानो हाथ आपवो तथा ते समये जोशीये थाली वगाडी जणाववुं के हस्तमेलापक थया पछी गोरे मधुपर्कादि पूजननो साहित्य ( कुंकुमात सोपारी फुल नाडु विष्टर साकर पान पुजापो दहिं मध घी, कासानी वाडकी नंग २ पाटलानंग २ दडीयानंग ७ तरभाण आचमनी पवाला, तांबानो कलश विगेरे लइ बेसवुं तथा वरनो बाप तथा कन्यानो बाप तेने बेसाडवा. तेमां वरना बापने पूर्वने मोडे तथा कन्याना बापने उत्तरने मोडे बेसाडी बेउ जणने

पाण्मातुरग्रजप्रभो ॥ वरद त्वं वरं देहि वांछितं वाछितार्थद ॥ २ ॥ अनेन फलदानेन फलदोऽस्तु सदा मम ॥ प्रारब्धकर्म-सपरि० गणेशाय० विशेषार्घ्यंस० ॥ हस्ते जलं गृहीत्वा ॥ यथाशक्त्युपचारैश्च यन्मया पूजनं कृतं ॥ रक्तचंदनपुष्पाणि सिद्ध्यर्थं देवाय कल्पयामि तत् ॥ सांगाय श्रीगणेशाय परिवारान्विताय च ॥ गदाधरेण गोत्रानुसारं

समंजनं संमुखीकारणमिति हरिहरगदाधरौ ॥ परस्परंगात्रविश्लेष इति भर्तृयज्ञः ॥ परस्परानुलेपनमिति केचित् ॥

विनैव कन्यावर्णं उक्तं ॥

कपाळे चाल्लो करी मात चोटी गणपति पूजन करावनुं. ते करावी वर कन्याना हाथ छोडावी मधुपर्क करावे छे—पछी सात ब्राह्मणने चाल्ला करावी कन्या-दाननो संकल्प करावी स्वरित वाचन करावीने सामासामी वरकन्याना पिताना गाल पिळावी गल्यु मोडुं करावी आशीर्वाद दइ रजा आपेछे. एने लग्नविधि कहेछे अने त्यारपछी पोतानी न्यातना रिवाजो एटले वरकन्याने आपवुं लेवु, विगेरे करी आटोपी लेछे एवा लग्नो काले करीने थवाथी वरकन्याना जे परस्-परना कर्तव्य, तथा प्रीति तथा तेनी उन्नति अथवा धर्म अर्थ काम अने मोक्षनुं साधन थवु, ते न थतां तथा विवाह विषे महर्षियोये कहेला वाक्यो प्रमाणे न थता लग्न पछी घणा दुखी जोवामां आवेछे तेम दुःखी होयछे तेनुं कारण फगत तेज छे के चार वस्तुने आपनारुं जे साधन विवाह ते विधिवत् न थाय तो बधुं ज निष्फल होय एमां नवाइ शी—जेना पर आ जन्मनो तथा परजन्मनो आधार छे तथा जेनाथी देव पितृ मनुष्यो तृप्त थायछे एवो जे विवाह तेमां खरुं कर्तव्य न करतां रुढीने पकडी गमे तेवां कर्तव्यो बंधनने लीधे विद्वान तथा विचारवंत पुरुषो करे छे (वर आवे छे ते वारे कन्यापासे पाननी पिचकारी मरावे छे, कन्यानी साथे गोर प्रदक्षिणा करेछे तथा सारा मुहूर्तमां कन्यानुं दान पोताना पिता विगेरेए संकल्प करी आपवुं जोइये तेने बदले गोर अथवा

धूपदीप युतानि च ॥ रक्ताच्छादन नैवेद्यं तांबूलादिफलानि च ॥ सर्वाण्यमृतरूपेण नमः संपद्यतां तव ॥ इति जलमुत्सृजेत् ॥ गणेशपूजनं कर्म यन्यूनमधिकं कृतं ॥ तेन सर्वेण सर्वात्मा वरदो स्तु सदा मम ॥ लंबोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ विघ्नानां नाशकर्ता च हरात्मज नमोस्तुते ॥ अनया पूजया सांगःसपरिवारः गणेशः प्रीयतां ॥ वरदोऽस्तु मे ॥ स्वाग्रेधान्यराशिं कृत्वा ॥ तदुपरि

---

महाराज पासे हाथ अरकाडावे छे पछी वैधव्यादि दोषोने नाशकरवावालुं वरुणपूजन तथा शचीपूजन करता नथी एवो त्याग करी गणपति पूजनादिक करेछे तो (वर) एटले श्रेष्ठ पुरुष आवे तेने मान आपी बेसाडवा तेने बदले तेना उपर पाननी पिचकारी मारीने अपमान करेछे. ब्राह्मणने उत्तम गणिये छैए, तो ब्राह्मणपासे प्रदक्षिणा करावबाथी पोताना पूर्वजो नर्कमां पडेछे. पोतानी कन्यानुं दान पोताना ७१एकोतेर पेडीना पितृओने तारवाने करवानुंछे. ते शास्त्रप्रमाणे मुहूर्त जोइने पोताने हाथे संकल्प करी आपवानुंछे. तेने बदले ब्राह्मण पासे करावेछे जेनुं फल विधिवत् न थवाथी बेउने मलतुं नथी. पाणि ग्रहण संस्कार जुदो छे त्यां वरना हाथमां कन्यानो हाथ आपवो एम विधि छे. पण आहि तेम करवानुं नथी तथा जेनाथी छोकरीनुं सौभाग्य वधे एवो विधि ते मूकी दइने केवल उतावलनेज माटे वरकन्याने जन्मनुं दुःख करेछे. माटे मारी प्रार्थनाछे के ए प्रमाणे न करता आ विवाहविधिमां कहेला पूजनादि शास्त्र प्रमाणे करवा तेम करवाथी ऐहिक तथा पारमार्थिक सुख मले छे ए धर्मशास्त्रनुं कहेवुंछे माटे ६४ पत्रमां लखेला आशिर्वादना मंत्रोथी आरंभ करी सांग लग्न क्रिया अनुक्रमे संपूर्ण करावबी, ए आपणा धर्मरक्षक ब्राह्मण क्षत्री वैश्यादिनुं कामछे-हवे प्राप्त थयलुं वरुण पूजन करवुं तेमां पेलाथी भातनी ढगली

समाश्रितः ।। मूलेतस्यस्थितोब्रह्मा मध्ये मातृगणाः स्मृताः ।। १।। कुक्षौतुसागराःसप्त सप्तद्वीपावसुंधरा ।। ऋग्वे-
दोऽथ यजुर्वेदःसामवेदो ह्यथर्वणः ।। २ ।। अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।। देवदानवसंवादे मथ्य-
माने महोदधौ ।। ३ ।। उत्पन्नोऽसि तदाकुंभो विधृतो विष्णुना स्वयं ।। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि
स्थिताः ।।४।। त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ।। शिवःस्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः।।५।।
आदित्यावसवोरुद्राविश्वेदेवाः स पैतृकाः ।। त्वयि तिष्ठंतु सर्वेऽपि यतः काम फलप्रदा ।। ६ ।। त्वत्प्रसादादिमं
यज्ञं कर्तुमिह जलोद्भव ।। सांनिध्यं कुरु मे देव प्रसन्नो भव सर्वदा ।। ७ ।। वरुणायनमः ।। प्रार्थनापूर्वकं नम-
स्कारं समर्पयामि ।। अनेन पूजनेन वरुणः प्रीयतां ।। दाता प्रत्यङ्मुखः उपविश्य वरपितरं गंधादिभिः पूज-
येत् ।। वरपितापि दातारं पूजयेत ।। उभौ उभयोः कपोले मांगल्यं कुर्यातान् ।। ततो दाता सदक्षिणा हरिद्राखंड-

---

हल्दना गाठिया, सोपारी, तथा पैसा, लेवा ( तेज प्रमाणे वरनो पिता पण ले छे एवो संप्रदायछे ) ते लई पछी कन्यानो पिता उपरप्रमाणेनो श्लोक
बोले के मारी दोष वगरनी छोकरी तमारा छोकराने माटे आपी एम कही वरना बापना हाथमा पोताना हाथमाना राखेला फल पैसा आपे.
पछी वरनो बाप कहे तमारी छोकरी मारा छोकराने माटे लीधी, वरने जुवो. पछी कन्यानो बाप कहेछे के आ फलद्रव्य हरिद्राखडे तमाकु छोकराने

श्रुतसप्त पूगीफलानि गृहीत्वा पठेत् ॥ आचारात् वरपिता च ॥ अव्यंगेऽपतितेक्लीबे दशदोष विवर्जिते ॥ इमां कन्यां प्रदास्यामि देवाग्नि द्विजसंन्निधौ ॥ इति वरपित्रेदद्यात् ॥ च पठेत ॥ वाचादत्तामयाकन्या पुत्रार्थं स्वीकृता त्वया ॥ कन्यावलोकनविधौ निश्चित स्त्वं सुखीभव ॥ १ ॥ ततोवरपिता ॥ वाचादत्तात्वयाकन्या पुत्रार्थे स्वीकृता मया ॥ वरावलोकनविधौ निश्चितस्त्वं सुखीभव ॥ २ ॥ कन्यापिता ॥ युष्मद्वराय योग्याय मंडपायतने मम ॥ अत्र पूगप्रदानेन लग्ने कन्या भविष्यति ॥ ३॥ वरपिता ॥ अस्मद्वराय योग्याय मंडपायतने तव ॥ अत्र पूगप्रदानेन लग्ने वरो भविष्यति ॥ ४ ॥ कन्यापिता ॥ विश्वंभरः सर्वभूतः साक्षिण्यो मम देवताः ॥ इमां कन्यां प्रदास्यामि देवाग्निगुरुसन्निधौ ॥ ५ ॥ देवाग्रे निवेद्य ॥ अनेन पूजनेन कर्माधीशः प्रीयतां ॥ इति वाग्दानं ॥ अथ शचीपूजनं ॥ **अथ मधुपर्कः** ॥ दाता आचम्यप्राणानायम्य ॥ अद्येत्यादि०कन्याविवाहांगत्वेन

---

कन्या आ मडपमा आपवी,ए हु निश्चय करुंछु तेमज वरनो बाप कहेछे के तमारी आपेली वस्तुवडे मारो छोकरो नियमित करेला लग्नमा श्रेष्ठपणुं पामशे.पछी कन्यानो पिता कहेछेके मारी छोकरी तमने सारा तथा सुशील जाणी भगवान् गुरु, अग्नि तथा अहिं आवेला मनुष्यो तेना समक्ष आपीश, ए प्रतिज्ञाओ करी ( पछी आचारथी ए ठेकाणे परस्पर बेउ जणाना हाथमा सोपारी पैसा चार वखत फेरवेछे. पछी कन्यावालो कहेछेके मारी सात पेडीये कन्या आपी तथा

आ गतंवरं मधुपर्केणार्चयिष्ये ॥ अर्चयेतिवरः ॥ तत्र सकलविघ्नौघध्वंसं विनायकं स्मरेत् ॥ ततो दाता वरस्याग्रे कृतांजलिपुटस्तिष्ठन् पठेत ॥ साधुभवानास्तामर्चयिष्यामो भवंतं अर्चयेति वरः ॥ दाता विष्टरं गृहीत्वा तिष्ठति अन्यकश्चित् ब्राह्मण स्त्रिः प्राह ॥ विष्ठरो विष्टरो विष्टरः॥ प्रतिगृह्यता मितियजमानः॥प्रतिगृण्हामीति वरः॥श्रेष्ठोस्मि वैसमा नानासुद्यतामिवभास्करः ॥ तिष्ठामि त्वामधः कृत्वा य इदं मेऽभिदीयते॥ अनेन मंत्रेण विष्टरमु दगग्र मासने निधाय तस्योपरि उपविशति ॥ पादार्थमुदकं पादार्थमुदकं पादार्थमुदकं ॥ प्रतिगृह्यतां प्रतिगृण्हामीति वरो गृहीत्वा ॥ स्वयमेववामं पादं प्रथमं पक्षालयति ॥ विराजोदोहोभवसि विराजोदोहमस्त्नवे ॥ विराजोदोहः पाद्याय मयि त्वं भव भोजल ॥ वामं प्रक्षाल्य ॥ दक्षिणपादस्यापि प्रक्षालनं मंत्रेणैव ॥ द्वितीयविष्टरमादाय विष्टरो विष्ठरो

---

वरवाले कहेछेके मारी सात पेढीये कन्या लीधी. पछी ते गणपतिना मोढा आगल मुकी पगे लागेछे, ए कर्म देवताने पाणी लइ अर्पण करवुं. एने वाग् दान कहेछे. हवे वैधव्य दोषने नाश करनारुं तथा सौभाग्य पुत्रपौत्रादिने आपवावालुं शचीपूजन करवुं ते थतुं नथी पण तेनुं चोखाना मंडलपर आवाहन करी यथाशक्ति पूजा करी प्रार्थना करवी. आचार्य रुत्विक् राजा प्रिय अतिथि वीगेरेआववाथी पेहेला मधुपर्क पूजन करवुं. तेमां पेहेलां मधुपर्कनो संकल्प करवो. त्रण वखत संकल्पमां केहेवानुं के तमो कन्यादान लेवा आवेला छो माटे तमारुं मधुपर्क पूजन करुं छुं. एम कन्याना पिताना केवाथी वरे केवुंके करो वरना

विष्टरः ॥ प्रतिगृह्यतां ॥ प्रतिगृण्हामीतिवरः ॥ श्रेष्ठोऽस्मि वै समानाना मुद्यतामिव भास्करः ॥ तिष्ठामित्वामधः कृत्वा य इदं मेऽभिदीयते ॥ इति मंत्रेण पादयोरधः निदधाति ॥ अर्घोऽर्घोऽर्घः ॥ प्रतिगृह्यतां प्रतिण्हामीति वरः ॥ वयं वरुणयुष्माभिः सर्वान्कामानशेपतः ॥ अतोर्घं त्वं गृहाणेमं भो ह्यापस्थममाप्नुपुयात् ॥ १ ॥ गमयामि समुद्रस्याम् योनिमापप्रयांतु वै ॥ वीराअरिष्टाश्चास्माकं मापरासेचि मत्पयः ॥ अनेन मंत्रेण गंधाक्षतकुशाग्रतिलसर्पपदाधि दूर्वान्वितं पात्रस्थमर्घं प्राग्वोदग्भूमौ निक्षिपेत् ॥ आचमनीय मुदकमाचमनीयमुदकमाचमनीयमुदकं ॥ प्रतिगृह्यतां प्रतिगृण्हामीति वरः॥ आचमनीयपात्रवामहस्ते कृत्वा॥ किंचिदुदकं दक्षिणचुलुके कृत्वा ॥ प्रियं जना-

---

सामुं उभा रही विष्टर लइ आ विष्टर ग्रहण करो एम केहेवुं ( पछी सदर्भ लइ तेने नाडुं विंटाळी राखे छे तेने विष्टर केहे छे ते विष्टार तेना हाथमां आपवो ते वरे लइ पोताना नीचे मुकवो. पछी पाद्य पात्र आपवुं पछी तरमाणु लइ वरे पोताना हाथेथी पोताना डाबा पगपर पाणी रेडवुं—अहिंया कन्यानी मा आवी तरमाणमा वर कन्याना पग मुकावी पछी कन्यानो बाप पोताना हाथेथी पगे हाथ फेरवे तथा कन्यानी मा आरीवनी पाणी रेडे छे, ए संप्रदाय छे. पछी बेउने कपाले चालो करी भात चोडी कन्यानी मा त्याथी जाय छे. बीजो विष्टर लइ यजमाने वरना हाथमा आपवो पछी ते विष्टरनो मंत्र भणी पोताना आसन पर मुकी बेसवुं तथा एक त्रांबाना अर्घ्यमा कंकु भात फूल दक्षिणा फल विगरे मुकी ते यजमाने वरना हाथमां आपवु तेने वरे मंत्र भणी पूर्व

नां यशसा पशूनां स्वामिनं कुरु ॥ शरीरिणामरिष्टानि वरुणाचमयाम्यहं ॥ सकृदाचम्य ॥ द्रि स्तूर्णिं मधुपर्कों मधुपर्कों मधुपर्कः ॥ प्रतिगृह्यतां प्रतिगृण्हामीति वराच्छादितं मधुपर्कपात्रं किंचिदुद्घाट्य समीक्षेत ॥समीक्षामि यथासर्वे ण्यहंभूतानि चक्षुषा ॥ तथाहं मधुपर्कं च प्रतीक्षामि खलु प्रभो ॥ समीक्ष्य सव्ये पाणौ कृत्वा ॥ मंत्रेण ॥ पूष्णो देवस्य सवितुर्हस्ताभ्यामाददे किल ॥ मधुपर्कं भर्गरूप माश्विनं सूर्यदैवतं ॥ इति ततो दक्षिणस्याना- मिकया मधुपर्कमालोडयेत ॥ मंत्रेण ॥ प्रयौमि मधुपर्कं च नाशने नादनीयकं ॥ निष्कृंतामि च यत्तद्देश्या- वास्याय नमोनमः ॥ दक्षिणस्यानामिकया त्रिः प्रदक्षिणमालोडयति ॥ ततः अनामिकांगुष्ठेन त्रि निरुक्षयति ॥ ततः प्राशनं ॥ परमेण मधव्येन रूपेणान्नाद्यकेचन ॥ मधव्यं परमं तेन ह्यश्नामि मधुनोशनं ॥ इति मंत्रेण प्रथमं कनिष्ठिकांगुष्ठाभ्यां द्वितीयअनामिकांगुष्ठाभ्यां तृतीय मध्यमांगुष्ठाभ्यां प्राश्य चतुर्थ तर्जन्यंगुष्ठाभ्यां तूर्णिं



---

तरफ रेडी देवुं एने अर्घ्य केहे छे पवालुं लइ तेमा–पाणी नाखी ते वरना हाथमा आपवुं. पछी ते लइ तेनाथी आचमन त्रण मंत्र भणी करवा–( एने आच- मनीय पात्र कहे छे ).ए प्रमाणे पाद्य अर्घ्य आचमनीयपात्र अपाया पछी मधुपर्कपात्र लेवुं तेमा कासानो वाडको तेमा घीई १पल, दहीं २ पल, मध १ पल एकठु–करवु तेने मधुपर्क केहेछे. तेमा रूपा नाणुं मूकी उपर कासानी वाडकी ढाकी ते हाथमा लइ मंत्र भणी आपवुं पछी वरे तेने डावा हाथमा लइ तेने

प्राश्य ॥ शेषं शिष्याय पुत्राय वा दद्यात्॥वा सर्वं प्राश्नीयात् ॥ ततो आचम्य॥ प्रियंजनानां यशसां पशूनां स्वामिनं कुरु॥शरीरिणामरिष्टानि वरुणाचमयाम्यहम्॥ आचम्य॥ द्विस्तूष्णिम् प्राणान् संमृषाति जलेन मम वाक् आस्येऽस्तु इति मुखं कराग्रेण संस्पृशति नासिकयोः प्राणवायुरस्तु तर्जन्यंगुष्ठाभ्यां दक्षिणादिनासारंध्रं संस्पृशति॥मम नेत्रगोलकयोः चक्षुरस्तु॥ अनामिकांगुष्ठाभ्यां युगपत् संस्पृशति ॥कर्णयोः श्रोत्रमस्तु ॥ मध्यमांगुष्ठाभ्यां युगपत्संस्पृशति॥ कनिष्ठिकांगुष्ठाभ्यां मम बाह्वोः शक्तिरस्तु ॥ हस्तेन दक्षिणाद्युरु संस्पृशति ॥ मम उर्वोरोजोऽस्तु ॥ मम देहस्यांगानि अरिष्टानि युगपत् संतु इति शिरःप्रभृति पादांतानि सर्वाणि अंगानि उभाभ्यां हस्ताभ्यां संस्पृशति ॥ तत श्चंद-

---

उगाडी मोढुं पछी तेमा पोताना जमणा हाथनी अनामिका आगली त्रण वखत फेरववी पछी पोतानी छेल्ली आगली तथा अंगुठा वडे खावु ए प्रमाणे —पछी अनामिका—पछी मध्यमा पछी तर्जनी वडे मळी चार वखत खावु—पछी हाथ धोइ आचमन करवु— (ए ठेकाणे—कन्यानी मा हाथ धोवाडवाने आवे छे तथा वरने पेट थोंगी सली पाटुडी आपे छे. तेमाथी वींटीनी चार वखत मधुपर्कने ठेकाणे दही लइने तेने हलावे छे तथा तेनाथी त्रण वखत ओठे अरकाडे छे. एम न करता मधुपर्क विधिवत् करी ते खावो, जेनाथी बुद्धि वृद्धि पामी लक्ष्मी मळे छे— ) ए प्रकारनी रीत छे. बाकी रहेलो मधुपर्कनो भाग ते पोताना शिष्यने अथवा छोकराने आपवो अथवा पोतेज सघळो खाइ जवो. अथवा

अप उपस्पृशेत् ॥ वरस्य समीपे भूमौ नादिभः वरं संपूज्य ॥ आचारश्चेत् वस्त्रादिकं देयं ॥ अथ गवालंभनं ॥ गोनिंषेधात् तत्स्थाने अजालंभः पायसं वा इति ॥ जयरामः गौरित्याद्युचारणं विवाहयज्ञयोः कलौ न प्रवृत्ति रिति गदाधरः ॥ कर्मदर्पणोक्तमधुपर्कप्रयोगः ॥

गवालंभनस्य निषेधात्तत्स्थाने गोनिष्क्रय द्रव्यदान कार्यमितिसंस्कार कौस्तुभे ॥

तेनो उत्तर तरफ पात्र मूकी देवुं. पछी आचमनी पात्रमांथी त्रण वखत मंत्र भणी आचमन करी पोताना शरीरे हाथ पाणीमां बोली अरकाडवा. मारे नाके वायुदेवता स्थिर रहो, एम कही अर्थ ( मारे मोडे वाणीना देवता स्थिर रहो. ) एम कही पोताना आंगलाओना अग्रथी पाणी मोडे अरकाडवुं. मारी आंखे नेत्र देवता स्थिर रहो ने आंखोनुं तेज वृद्धि पामो एम कही अनामिका अंगुष्ठ वडे आंखे तर्जनी अंगुष्ठ वडे बेउ नाकना छिद्रने पाणी अरकाडवुं. मारा कानना देवता स्थिर रहो तथा मारा काने श्रवणशक्ति वधो, एम कही वचली आंगली अने अंगुठावडे काने पाणी अरकाडवुं. पछी पाणी अरकाडवुं, तेनाथी टेल्ली आंगली अने अंगुठावडे पाणी बे बाहुए अरकाडवुं. तेना देवताने कहेवुं के मारी शक्ति वधो. जमणा हाथेथी उरने पाणी अरकाडवुं, तेनाथी पोतानुं पराक्रम वधे छे. पछी पोताना आखा शरीरे पाणी छांटवुं ने कहेवुंके मारा शरीरपर आवता अरिष्टोनो नाश करो. एम कही बेउ हाथवती आखा शरीरे माथाथी पग लगी स्पर्श करी जवो. एवी रीते आचमन करवाथी पोताना शरीरना देवता स्थिर रही समयानुसार उपयोगी फल आपे छे. माटे विधिवत् आचमन करवुं जेनाथी पवित्र थवाय छे. हवे गवालंभन करवुं जोइये, पण कलियुगने लीधे निषेध करेलो छे. तेथी वरना सामु उत्तराग्र दर्भ मूकी त्रण वखत गायनो उच्चार करी हाथमां गोनिष्क्रय लइ संकल्प करवो तथा ते द्रव्य पहेलां पाथरेला दर्भसर मूकी देवुं. पछी गायनी प्रार्थना करी कहेवुं के हुं अमुक तमारो यजमान अमुक दास तेने पापथी मुक्त करो एम कही एक दर्भ दूर नांखवो. ए विधि थया पछी यजमाने वरनुं पूजन कुंकुमथी करी शक्ति होय

द्रः पतितो वापि हीनो लंपट एव च ॥ पतिस्त्रिभिर्नहंतव्यः कातरः कृपणोपिवा ॥ १० ॥ एतद्गुणविशिष्टोपि मनो वाक्काय कर्मभिः ॥ शुश्रूषा करणंचैव पत्युराज्ञा विलेपनं ॥ ११ ॥ बाल्यौवन वार्धिक्ये स्वातन्त्र्या करणं तथा ॥ कामात्क्रोधात भयाल्लोभात च्छलतो भयतोपिवा ॥ १२ ॥ स्वमर्यादाव्यतिक्रम्य परपुंसोभि सेवनं ॥ स्वाम्यनुज्ञां विनायच्च व्रतानां करणं तथा ॥ १३ ॥ अर्थकार्ये ममत्वं च कामकार्ये प्रागल्भता ॥ निकटस्थे सदापत्यो हरिद्रा कुंकुमादिभिः ॥ १४ ॥ संस्काराकरणाच्चैव दूरस्थे करणात्तथा ॥ निर्लज्ज-त्वं चना स्तीक्ष्यं विचित्र करणात्तथा ॥ १५ ॥ आलस्यं च शुभेकार्ये निद्रा कलह मेवच ॥ भर्तृविद्वेषिणी भ्यश्च सहसंवसनंतथा ॥१६ ॥ भोजनस्याप्रदानं च पद्धतिभेदा त्तथैव च ॥ गुरुब्राह्मणभिक्षूणामातिथ्या करणात्त-था ॥ १७ ॥ दीनांधः कृपणानां च क्षुधार्ताणां तथैव च ॥ अन्नदाने विहीनत्वं लोभेनानृत भाषणं ॥ १८ ॥ भर्तृराज्ञा विनायच्च स्वबंधुभ्यः प्रदापनं ॥ भर्तृराज्ञाव्यतिक्रम्य स्वेच्छया करणंतथा ॥ १९ ॥ तृषिते क्षुधितेपत्यु र्जलान्नस्य च भक्षणं ॥ भर्तरिप्रोषिते तैला भ्यंग मुद्वर्तनं तथा ॥ २० ॥ मण्डनानां च करणं परि-धान सुवाससः ॥ परगृहेषु गमनं समाजोत्सव दर्शनं ॥ २१ ॥ क्षेत्राद्ग्रामाद्वनात्पत्यु रागते मुदितासती ॥ प्रत्यु-

त्यानासनाद्यैश्च सन्मानाकरणात्तथा॥ २२ ॥ तांबूल व्यंजनाद्यैश्च पादसंवाहनादिभिः ॥ सुचाटुवचनं चैव शुश्रूषा करणं तथा ॥ २३ ॥ ताडितायां क्रुधापत्यु रोदनं प्रति ताडनं ॥ पतिवाक्य मनादृत्य प्रत्युक्ति करणं तथा ॥ २४ ॥ भर्तुकथामनादृत्य परेषां गुणकिर्तनम् ॥ उत्सवादिषुबंधूनां भुवने वसनं चिरं ॥ २५ ॥ रौद्राथा मृतवत्सायाः संपर्कःरौद्रभायणम् ॥ भर्तृपूर्वंच शयनं पश्चादुत्थापनं तथा ॥ २६ ॥ मृते च भर्तरि सह गमना करणंतथा॥केशानां रक्षणं चैव द्विवार भोजनं तथा ॥ २७ ॥ पर्यंङ्के शयनं चैव स्रक् ताम्बूल निसेवनात् ॥ शरीरपोषणं चैव शैय्याया मन्नभक्षणं ॥ २८ ॥ कलिंगादिनिशिद्धस्य दग्धान्नस्य च भोजनं ॥ पलाण्डु लशूनादीनां कुष्मांडस्य च भक्षणं ॥ २९ ॥ मसूरादी निषिद्धानां भक्षणं गर्भपातनं ॥ फलानां हरणंदेव ब्रह्म-स्व हरणं तथा ॥ ३० ॥ भर्तृघ्नी भि स्तथागर्भ घातिनिभिस्तथैवच ॥ कुलटाभिः सुरापानं स्तीभिः सहभोजनं ॥ ३१ ॥ सुगंध द्रव्य हरणं कस्तूरी कुंकुमादिकं ॥ तैल दुग्ध घृतादीनां विक्रयो फलविक्रयः ॥ ३२ ॥ कन्या-विक्रयणंचैव दास्यादिनां चविक्रयः ॥ रसानां विक्रयश्चैव मधु तक्रस्य विक्रयः ॥ ३३ ॥ यूका मत्कूण स-र्पाणां हिंसनं प्राणिहिंसनम् ॥ दंपत्योप्रतिभेदश्च कूटसाक्षि स्तथैवच ॥ ३४ ॥ विवाहे विघ्नकरणं तडागादि

प्रभेदनं ॥ वापी कूपतडागेषु विषप्रक्षेपणं तथा ॥ ३५ ॥ ज्वालनंपरवेश्मानां सपत्नीबालघातकं ॥ मिथ्यापवादकरणं बालानां मारणं तथा ॥ ३६ ॥ गो ब्राह्मण देवानां व्रत्तिच्छेदन मेवच ॥ उद्यापन विहीनानां व्रतानां करणं तथा ॥ ३७ ॥ सुवर्ण रौप्य रत्नानां स्तेयो विक्रयमेव च ॥ यतिनिंदा सती निंदा तपस्वीनिंदनं तथा ॥ ३८ ॥ पशूनां हिंसनंचैव देव ब्राह्मण निंदनं ॥ शौचाचारविहीनत्वं प्राणीनां पीडनं तथा ॥ ॥ ३९ ॥ अपात्रेदानकरणं पात्रद्वेष स्तथैवच ॥ श्रमितानां क्षुधार्तानां दासादीनां तथैव च ॥ ४० ॥ सक्रोधमन्नदानं च कुटिलाक्षेपसंयुतं ॥ तीर्थयात्रा विहीनत्वं अनास्तिक्य मनार्जवम् ॥ ४१ ॥ स्वपतिद्वेषकरण मात्मघातस्तथैवच ॥ सुप्तेपत्यौ शइतव्यं भुक्तेभोजन माचरेत् ॥ ४२ ॥ उत्थानात्पूर्व मुत्थाय सदातद्धितमाचरेत् ॥ कोपनंकर्हिचित्कुर्यात्र रुष्टेतु मुदिता भवेत् ॥ ४३ ॥ दुःखिते बहुदुःखा च प्रोषिते मलिना कृषा ॥ अयमेवपरोधर्मो नारीणां परिकीर्तितः ॥ ४४ ॥ एतद्धर्मव्यपायेन रजोग्रस्ता चयद्भवेत् ॥ पातकं सुमहच्चैव इह वा परजन्मनि ॥ ४५ ॥ मयाकृतानि घोराणि पापानि सुबहुन्यपि ॥ एतेषां क्षालनार्थाय प्रायश्चित्तमहं वृणे ॥ ४६ ॥ एतत्पापविशुध्यर्थं प्राजात्य त्रयंचरेत् ॥ इदं गोमिथुन द्रव्यं गंधपुष्पाद्यर्चितं सभ्योपविष्टेभ्यो ब्राह्मणेभ्यो

ऽहं संप्रदास्ये ॥ गुरुलघुपापानां विशोधनार्थं प्रायाश्चित्तमहंयाचे ॥ यान्यतामिति ब्राह्मणोब्रूयात ॥ प्रजापत्य संकल्पः ॥ अद्येत्यादि० तिथौ ममदेहशुध्यर्थंकरिष्य माणकर्मण्यधिकारार्थं यथासंख्याकान् प्राजापत्यान् रजत् प्रत्याम्नायद्वारा अहमाचरामि तेनकरिष्यमाणकर्मण्यधिकार सिद्धिरस्तु ॥ अनेन कृतप्रायश्चित्तेनामुकगोत्रो-हममुकनामाहं निष्पापोभवेयमिति त्रिर्वाच्यं ॥ अहंनिष्पापो भूयासं अहं निष्पापो भूयासं अहंनिष्पापो भूयासं॥ मम देह शुद्धि रस्तु मम देद शुद्धिरस्तु मम देह शुद्धिरस्तु ॥ अहं एतत् कर्म योग्यो भूयासं अहं एतत् कर्म

अर्थ—गोदाने वत्सयुक्तागौ सुशिला सुपयस्विनि । वृषदाने शुभोनड्वान् सुशुक्लांबर कांचनः ॥ १ ॥ निवर्तनानि भू दाने धराद्यात् द्वि जातये ॥ दश हस्तेन दंडेन त्रिंशदंडान्निवर्तितं ॥ २ ॥ दशनान्येव गोचर्म दत्वापापैः । इति सूर्यारुण संवादग्रंथे । एकभक्तेन नक्तेन तथैवायाचिते न च । उपवासेन चैवायं पादकृच्छ्र उदाग्रताः । इति अत्रिस्मृतौ ॥

---

अर्थ—र्यानो प्रायश्चित्त प्रयोग थया पछी पुरुष प्रमाणे राखेली हाथमा वस्तु नीचे भगवान् पासे मुकी नमस्कार करावा, तथा संकल्पकरवो के जे मे मारी शक्तिप्रमाणे प्रायश्चित्त कर्यु तेनाथी मने अमुक कर्म करवा अधिकार थाओ, पछी सभा दंडना शक्तिप्रमाणे पैसाब्राह्मणोना पगआगाडी मुकी. यजमानेरेहेवु. हु पापवगरनो थयो, मारोदेहशुद्धथयो. हु आकर्मकरवायोग्यथयो एम त्रणवखतकेवाथी. ब्राह्मणोये कहेवु, उपरप्रमाणे पछी ब्राह्मणोने नमस्कारकरी. उदिच्याद्यविष्णुश्राद्ध करवुं,

योग्यो भूयासं अहंएतत् कर्म योग्यो भूयासं ॥ एवं यज नाच्कृते द्विजाः ब्रूयुः॥त्वं निष्पापो भूयाः त्वं निष्पापो भूयाः त्वं निष्पापो भूयाः ॥ तवदेह शुद्धिरस्तु ॥ तवदेहशुद्धि रस्तु ॥ तव देहशुद्धिरस्तु ॥ त्वं एततकर्म योग्यो भव ॥ त्वं एततकर्म योग्यो भव ॥ त्वं एतत कर्म योग्यो भव ॥ एवंवारत्रयं द्विजमुखा च्कृत्वा सभोपविष्ट ब्राह्मणानां पादाभिवंदनं कुर्यात् ॥ अद्येत्यादि० प्रायश्चित्तस्योत्तराङ्गानि करिष्येति संकल्प्य ॥ उत्तराङ्गा विष्णुश्राद्धं ॥ विष्णोएतत्तेपाद्यं पादावनेजनम् प्रक्षालनम् ॥ इदमत्र चंदनं च पुष्पम् ॥ स्वपादौ करौ प्रक्षाल्याचम्य विष्णुमंत्रेणादि ग्वंधः ॥ अक्षतान् गृहीत्वा ॥ नमस्ते देवदेवेश पुराण पुरुषोत्तम ॥ इदं श्राद्धं हृषीकेशरक्षत्वं सर्वतो दिशि ॥ १ ॥ पूर्वेनारायणः पातुवारिजाक्षस्तु दक्षिणे ॥ प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे ॥ २ ॥ आयान्तु उत्तराङ्ग वैष्णवश्राद्धोपहाराणां पवित्रतास्तु ॥ अद्येत्यादि० तिथौ

मिता क्षरा महार्णव नारायण भट्टादि भिर्उक्त प्राजापत्य प्रत्याम्नायाः कथ्यंते । तच्च सर्वं प्रायश्चित्तं शक्त्यानुसारेण षडब्दं त्र्यब्दं सार्द्धाब्दं अन्यद्वा पर्षदोनुमतं । प्राजापत्यप्रत्याम्नायाश्च गायत्र्या युत जपेन । गायत्र्या तिल होम सहस्रेण । द्वादश ब्राह्मण भोजनेन तीर्थ योजन यात्रया एक गोदानेन । स्वर्ण रूप्ययो निष्कं तदर्द्धं तदर्द्धेन वा द्वात्रिंशत्पणैर्वा गोमूल्या नामशक्त्या दानेन शुष्ककेशस्य द्वादशस्नानेन द्विगुण-द्वादशप्रान्नदानादौचैकः प्राजापत्य इति ॥ निष्क ( माषा ४० ) तदशक्तौ द्वात्रिंशत्ताम्रपणाः कनिष्ठाः ॥

प्रायश्चित्तोत्तराङ्गं वैष्णव श्राद्धमहं करिष्ये ॥ विष्णवे इदमासनम् ॥ इदमन्नचंदनं पुष्पं धूपं दीपं यथादत्तं गंधाद्यर्चनं विष्णवेन० इदंवोज्योतिः वैष्णवश्राद्धस्यार्चनविधेः परिपू० ॥ आचम्य विष्णु प्रीतये त्रिभ्योधिकान् युग्मान् ब्राह्मणान् पूजापूर्वकं भोजन निष्क्रय द्रव्य दान द्वारा अहमाचरामि ॥ आमान्नंवा दद्यात् सुप्रोक्षितादि करणं वैष्णवश्राद्धप्रतिष्ठासिध्यर्थं दक्षिणां विष्णवे० अद्यपूर्वोच्चरित उत्तरांगवैष्णवश्राद्धविधेः परिपू० इति उत्तरांग ॥ **विष्णुश्राद्धम्** ॥ उत्तराङ्गगोदान द्रव्यंगृहीत्वा अद्येत्यादि० तिथौ प्रायश्चित्तस्योत्तराङ्गतयाविहितं गोदानप्रत्याम्नायत्वेन यथाशक्तिगोमूल्यनिष्क्रयद्रव्यं विष्णुरूपाय ब्राह्मणाय तुभ्य महं संप्रददे ॥ इत्युत्तराङ्ग गोदानं ॥ आचम्य सत्येशस्य यथाशक्त्या पूजनं करिष्येति संकल्प्य अष्टशक्तिसहित

तिलालोहं हिरण्यं च कार्पासं लवणं तथा । सप्तधान्य क्षिति गाँव एकैकं पावन स्मृतं ॥ इति गारुडे ॥ व्रिहयो यव गोधूमा मुद्गा माषा प्रियंगवः । तिलाश्च सप्तमाप्रोक्ता सप्तधान्य मुदाहृतं । इति देवयानीये ॥

---

अर्थ—वैष्णवश्राद्ध यथा पछी, उत्तराङ्ग गोदान आपवुं, ते प्रत्यक्ष न होय तो तेनुं मूल्य यत्किंचित्लेवु तथा अन्य गोमिथुन एटले वाछरडा वाछडी प्रत्यक्ष लेवा न होय तो ए ठेकाणे—॥आनो लेवानो चालछे, तेवइ संकल्प करवो, तथा स्थापितसत्येश मुर्तिनु

शुचिर्भवेत् ॥ १ ॥ अथ गोमयस्नानं ॥ अग्रमग्रश्चरंतिनां औषधीनां रसंवने ॥ तासां वृषभपत्नीनां पवित्रं काय शोधनं ॥ २ ॥ जन्मेरोगं च शोकं च पापं मे हरगोमय ॥ गोमयेन तु यःस्नात्वा आपाद तल मस्तके ॥ ३ ॥ अथ पंचगव्य स्नानं ॥ एकत्रं कृत्वा स्नानं ॥ गोमूत्रं गोमयं क्षीरं दधीसर्पिकुशोदकं ॥ सर्वपाप विशुध्यर्थं पंचगव्यं पुनातुमां ॥ ४ ॥ अथ गोरज स्नानं ॥ गवांक्षुरेणनिर्धूतं यद्रेणुगगनेगतं ॥ रजसातेन संलेपो महापातक नाशनं ॥ ५ ॥ अथ धान्य स्नानं ॥ धान्यौषधीमनुष्याणां जीवनं परमं स्मृतं ॥ तेन स्नानेन देवेश मम पापंव्यपोहतु ॥ ६ ॥ अथ फल स्नानं ॥ वनस्पाति रसोद्दिव्य फलपुष्पव्रतं सदा ॥ तेन स्नानेन देवेश

दान माचमनं होमं भोजनं देवतार्चनं ॥ मौढ पादो न कुर्वीत स्वाध्याय पितृ तर्पणं ॥ आसनारूढ पादस्तु जान्वोर्वा जंघयोस्तथा ॥ कृतायावत् क्रियायश्च मौढ पाद स उच्यते ॥ इति शाट्यायनः ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ॥ जपो होमस्तथादानं तत्सर्वं निष्फलं भवेत् इतिवन्हि पुराणे ॥ होमदेवार्चनाद्यास्तु क्रियास्वाचमने तथा ॥ नैकवस्त्र प्रवर्तेत द्विजवाचनके जपे ॥ सव्यांदंशा परिभ्रष्ट कटिदेश-धृतांबरः ॥ एकवस्त्रं त्रयाविधात् दैवपित्रे च वर्जयेत् ॥ इति गौतमस्मृतौ ॥ दर्भहिना तु यासंध्या यचदानं विनोदकं ॥ असंख्यातं च यज्जप्तं तत्स र्वं निःप्रयोजनं ॥ अवेक्ष्य प्रोक्षणंकृत्वा आलभ्य सोदकेनच ॥ पाणिनास्पृष्ट्वा दानंदद्यात्॥ इत्यापस्तंबः ॥ सर्वाण्युदकपूर्वाणि दानानि यथाश्रुति विहरेत् ॥ तोयंदद्याद्द्विजकरे दानेविधिरयं स्मृतः ॥ सकुशोदकहस्तश्च ददामीति तथावदेत् ॥ इति वाराहपुराणे ॥

फलव्रतमनन्तकं ॥ ७ ॥ अथ औपधी स्नानं ॥ औपधी सर्व वृक्षाणां नृणगुल्म लताद्रुमाः ॥ दुर्वा सर्षप संयुक्ता सर्वौपध्यः पुनातु मां ॥ ८ ॥ अथ हिरण्य स्नानं ॥ हिरण्यगर्भ गर्भस्थं हेमज विभावसोः ॥ अनंत पुण्यफलदं मम पापं व्यपोहतु ॥ ९ ॥ अथ गंगोदकस्नानं ॥ विष्णुपादाग्रसंभूतां गंगे त्रिपथगामिनी ॥ धर्म द्रव्येति विख्याता पापं मेहरजान्हवी इति गंगोदकस्नानं ॥ १० ॥ वैष्णवोपि भस्माऽभावेकुशोदकस्नानं ॥ कुशमूलेस्थितोब्रह्मा कुशमध्येजनार्दनः ॥ कुशाग्रे शंकरोदेव स्तेननश्यन्तु पातकं ॥ १ ॥ ततोशुद्धोदकेन स्नात्वा ॥ हस्ते पुष्पाक्षतान् गृहीत्वा ॥ अपराधसहस्राणि लक्षकोटी शतानि च ॥ नश्यान्ति तत्क्षणात्पापं सत्येश तवपूजनात् ॥ २ ॥ सत्येशपंचवक्त्रत्वं लक्ष्म्यासहजगत्पते ॥ वासुदेवततः पूर्वे नृसिंहो दक्षिणेस्थितः ॥ ३ ॥ कपिलः पश्चिमास्ये तु वाराहश्चोत्तरे स्थितः ॥ ऊर्ध्ववक्त्रेच्युतोज्ञेय एतद्वै ब्रह्मपंचमं ॥ ४ ॥ सत्येशः

अंतर्जानुकरं कृत्वा सकुशंतु तिलोदकं ॥ फलान्यपि च संधाय प्रदद्यात् श्रद्धयान्वितः ॥ इतिगौतम स्मृतौ ॥ पात्रासान्निधाने ॥ मनसापात्र-मुद्दिश्य जलंभूमौ विनिक्षिपेत् ॥ विद्यते सागरस्यांतो दानस्यांतो न विद्यते ॥ इति नारदीयपुराणे ॥ दानकाले तु संप्राप्ते पात्रे वा सन्निधौ जल ॥ अन्यविप्रकरे दत्वा दानं पात्रे विधीयते ॥ इति षट्त्रिंशन्मतात् ॥

पद्म कौमोदकीशंखच-संस्थितंराजन् पूजाकाले सदैव हि ॥ क्षीरोदपादचंद्रास्य पद्मकर्णिक संस्थितं ॥ ५ ॥ पद्म कौमोदकीशंखच-क्राण्यस्त्राणि धारणं ॥ ६ ॥ यस्यस्मृत्या चनामोक्त्या तपोयज्ञ क्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्योवंदेत-मच्युतं ॥ ७ ॥ स्थापितदेवताभ्योनमः ॥ प्रार्थना पूर्वकं नमस्कारं समर्पयामि ॥ कृतस्य० अष्टसंख्याकान् ब्राह्मणान् यथा संपन्नेनान्नेन तृप्तिपर्यंतं यथाकाले भोजयिष्ये ॥ कृतस्य० नानानांगोत्रेभ्यो ब्राह्मणेभ्यः यथा

पात्रंमनासि सचिंत्य क्रियावित्त गुणान्वितं ॥ देशे काले च संप्राप्तेदेयमप्सु विनिक्षिपेत् ॥ उभयासन्निधाने तु विशेष स्तत्रैवोक्तः ॥ द्रव्यपात्र विकल्पेथेत्परोक्षं दातुमुद्यतः ॥ तंध्यायाद्धे ध्रुवं पात्रं द्रव्यमादित्यदैवतं ॥ इति धौम्यः ॥ नामगोत्र समुच्चार्य संप्रदानस्य चात्मनः ॥ संप्रदेय प्रयच्छंति कन्यादाने तु पुंस्त्रियमिति ॥ नांदीमुखे विवाहे च प्रपितामह पूर्वकं ॥ नामसंकिर्तयेद्विद्वान् अन्यत्र पितृपूर्वकं ॥

---

अर्थ—दशप्रकारनु स्नान थयापछी शुद्ध जळथी स्नान करवु, पछी फुल चोखा हाथमा लइ विष्णुसत्येशनीप्रार्थना करवी, प्रार्थना करी भगवानपर फुल चडावी नमस्कार करवो, तथा ब्राह्मण भोजननो सकल्प करवो, तथा ब्राह्मणोने दक्षणा आपवानो सकल्प करवो, तथा कासानापात्रमाथी घी छेडी आगळी धर्ता चार वखत बाहर लाखवुं, पछी तेमा रुपानाणु मुकी सकल्पकरी ब्राह्मणने आपवु, ताथा सूर्यना दर्शन करी करेला कर्मनो सकल्प करी भगवानने अर्पण करवु, पछी स्नानकरी गंगाजळनु पानकरी गोपीचदनादी धारणकरी स्वस्थ चित्तथइ मंगलालकार धारणकरी कर्म करवाना मडपमा जइ सारा उक्त आसनपर बेसवु, एप्रमाणे देहशुद्धिप्रयोग समाप्त थयो.

शक्तिदक्षिणां दास्ये ॥ ततोमुखावलोकनं ॥ दिव्यन्तरिक्षभूमौ वा यन्मे किल्बिषमागतं ॥ तत्सर्वं आज्यसंस्प-
र्शात प्रणाश मुपगच्छतु ॥ १ ॥ अलक्ष्मीर्यच्चदौर्भाग्यं ममगात्रे व्यवस्थितं ॥ तत्सर्वंशामयेत्याज्यं लक्ष्मीम्
पुष्टिं च वर्धयत् ॥ २ ॥ आज्यंतेजसमुद्दिष्टं आज्यं पापहरं परं ॥ आज्येसुराणामाहारोआज्येलोकाःप्रतिष्ठिताः
॥ ३ ॥ इदं कांस्यपात्रं घृतपूरितं पंचरत्नसहितं सूर्यदैवतं छायादोषनिवारणार्थं आचार्यायाहं दास्ये ॥ आज्या
भावे अशक्तौ सूर्यवेक्षणं ॥ अद्यपूर्वोचरित० भवतां ब्राह्मणानां वचनात् श्रीतीर्थविष्णोः प्रसादात प्रायश्चित्तविधे
र्यन्न्यूनातिरिक्तं तत्सर्वं परिपूर्णतास्तु ॥ अतः परंस्नात्वा ॥ विष्णवेनमो विष्णवेनमो विष्णवेनमः ॥ इति श्रीज-
यानंदात्मज मूलशंकरशर्मणा विरचितायां विवाह कौमुद्यां तृतीय मुद्यापनप्रकरणे देहशुद्धिप्रयोगः ॥

॥ श्रीगणेशायनमः ॥ श्रीराधापुरुषोत्तमाभ्यां नमः ॥ **श्रीपुरुषोत्तम वृतोद्यापन विधिर्लिख्यते॥**

यथालाभोपहारेण मासे चास्मिन् मलिम्लुचे ॥ पूर्वोन्हि प्रातरुत्थाय कृत्वा पूर्वान्हिका क्रियाः ॥१॥ गृहित्वा निय
मं पश्चात वासुदेवं हृदि स्मरन् ॥ उपवासं स नक्तं वा एक भूक्तस्तु भामिनी ॥ यःकश्चि न्निश्चयं कृत्वा
प्रीतःस्यात् कृष्णराधिका ॥ तीर्थे गत्वा स्नान विधिपूर्वकं प्रायश्चीतं कृत्वा ॥ गृहे आगत्य सर्वे उपहारान्

समिपे गृहित्वा ॥ आसने उपविश्य ॥ यजमानभाले तिलकं कृत्वा ॥ आचम्य ॥ प्राणानायम्य ॥ शिखांबध्वा ॥ नियम गृहणमंत्रः ॥ हस्ते गंधाक्षत जल पुष्प पुगीफलानि सहिरण्यानि गृहीत्वा ॥ तत्र मंत्रः ॥

सदोपवीतिना भाव्यं सदाबद्धशिखेन च ॥ विशिखोप्युपवीतिश्च यत् करोति न तत्कृतं ॥ इति कात्यायनोक्तेश्च ॥ तस्मात् शिखाबन्धनानन्तरं सर्व कर्मणा मुपयोगित्वं ज्ञातव्यं ॥ विष्णोश्चरणोदक ग्रहणा नंतरं आसने उपविश्य ॥ इति गोविंदार्चन चंद्रिकायां ॥

---

जे मनुष्यने राधापुरुषोत्तमदेवनुं अथवा कोइपणदेवनुं उद्यापन करवुं होय तेणे पूर्वांगक्रिया करवानी अवश्यकता छे तेटलु थया पछी जे देवनु प्राधानिक पणु होय तेनी क्रीया करवामा आवे छे. ॥ घणा लोकोना अभिप्राय मळवाथी अत्र राधापुरुषोत्तमने प्रधान मानी तेनुं मतलब्यु छे तेमा पुरुषोत्तम मास आवे ते पेहेला तेमा जोयतो साहित्य तैयार करी शुक्लप्रतिपदाए प्रात काले उठी शोचादि क्रिया परवारी तीर्थे जइ स्नान करी तथा प्रात कृत्यपरवारीने ब्राह्मणोने बोलवबा, तथा तेमनीपासे श्रीराधिकासहित पुरुषोत्तमदेवनु कलश उपर स्थापनकराववुं तथा दीपस्थापन करवुं, तथा महिना सुधि जे बने ते नियम लइ पाळवो, हवे तेमा करेला व्रतनुं उद्यापन करवुंज जोइये तेने माटे व्रतमा कहेला दाडामांथी अनुकुळदाडो ग्रहणकरवो पछि ते व्रतमा जोइता साहित्यनी टीप आपेली छे तेना प्रमाणे अथवा शक्तीप्रमाणे साहित्य एकठु करवुं, पछी उद्यापनना आगले दिवसे सहवारे वेळा उठी नित्यक्रिया सघळी परवारी, वासुदेवभगवाननु ध्यान धरी नियमग्रहणनो संकल्प करवो. पछी तीर्थे जइ ब्राह्मणने लइने, तथा त्या स्नानविधि करि विधिवत् प्रायश्चित्तप्रयोग करवो. अथवा न बने तो घेर करवो ( उद्यापनना आरंभने दिवसे करवानो चाल पडी गयोछे ) पछी घेर आवी सघळा उपहारने लइ देवनो मंडप विगेरे सुंदर शोभायुक्त करीने तथा चरणामृत तुलसी तिलक धारण

प्रतिप्रत्तिथि मारभ्य दर्शेचैव समापयेत्॥मासमेकं करिष्यामि व्रतं श्री पुरुषोत्तम ॥ उपवासेन नक्तं वा एक भुक्तं करिष्यति ॥ दीपदानादविछिन्नात् प्रीयतां पुरुषोत्तम ॥ स्नानं दानंजपं पूजां तर्पणं द्विज भोजनं ॥ असिम-

आचमन–प्रथमं यः पिबे दापः ऋग्वेदस्तेन तृप्यति ॥ यद्द्वितीयं यजुर्वेद तेन प्रीणाति भारत ॥ १ ॥ यत्तृतीयं सामवेदं तेन प्रीणाति पाडव प्रथम यन्मृजेदास्यं दक्षणांगुष्ठ मूक्तत: ॥ अथर्ववेदं प्रीणाती तेन राजन्न संशयः ॥ २ ॥ गोविंदार्चन चंद्रिकायां ॥

---

करीने पाटलापर रातुं आसन पाथरीने कर्त्ताये बेसवुं पछी गोरे यजमानने कपाळे चाल्लो करी, आचमन प्राणायाम करावी यजमानना हाथमा पाणी चंदन फुल फळ दक्षिणा लेवाडवा तथा उपर लखेलो मत्र नीयमनो ते बोलावी पाणी तरभाणामा मुकवु, पछि प्रकरण पेहेलाना२ पत्रथी शांतिपाठनो आरभ करीने प्रधान सकल्प पर्यंत करावबो तेमा हाथमा पाणी लइ चदन फुल दक्षणा मुकी केवुंके मारादरेक पापो दूरथवा तथा पुत्रपौत्रादि प्राप्तथवा तथा गोलोक वासीनी प्रीति मेळववा करेला व्रतनु अथवा व्रतधारण करवा उद्यापन करु छउ, ए सकल्प ब्राह्मण बोलेछे. तेनो अर्थछे एथया पछी अंगसकल्प करवो पडेछे ते प्रकरण पेलाना२ पत्रथी आरंभी पुण्याहवाचनात प्रयोग करवो, पछी सकल्पना क्रमप्रमाणे कर्म करवुं. हवे प्रधान कर्मना अगभूत कर्म करवु जोइये ते पुण्याहवाचन पछी. माटे ज्या प्रधान देवनु मडल काढ्यु होय त्याब्रह्मादि देवोनुं स्थापन करवा सकल्प करवो, ते थया पछि डाबा हाथमा यजमाने चोखा राखी ब्राह्मणो कहे त्या मंत्राते वधाववावोनु ब्राह्मणोये ते देवना स्थान यह सोपारी सुर्णसह मुकवु तेनापर आवो हनरूही स्थापन करावबु, ए प्रमाणे ब्रह्माथी आरंभी वैनायकी पर्यंत देवोनु स्थापन करवु.

न्मासे करिष्यामि तेन पापं व्यपोहतु ॥ सुमुखश्चेत्यादि पठित्वा ॥ **अथ प्रधान संकल्पः** ॥ अद्येत्यादि० देशकालौ संकीर्त्य०मम, आत्मनः, पुराणोक्त फल प्राप्त्यर्थं अस्माकं सकुटुंबानां सपरिवाराणां अशेष पापक्षयार्थं पुत्र पौत्रादि सुखश्री प्राप्त्यर्थं गोलोक दक्षिण पार्श्वस्थ वैकुंठ शिवपुर निवासपूर्वक गोलोकाधिप राधिकादि पुरुषोत्तम पादाब्ज सेवा प्राप्त्यर्थं आचरितस्याचरिष्य माण व्रतस्य संपूर्ण फलप्राप्तये यथा मिलीतोपचारद्रव्यैः यथाशक्ति पुरुषोत्तम मास व्रतोद्यापनाख्यं कर्म करिष्ये ॥ **अथ अंग संकल्पः** ॥ तदङ्गभूतं दिग्रक्षणं, कलशाराधनं, पंचगव्यकरणं, गणपतिपूजनं, गणेश गौर्यादि मातृकाणां स्थापनं; सांकल्पेन विधिना वैश्वदेव पूर्वक सहिरण्य नांदीश्राद्धं अर्घवंदनं ब्राह्मणवरणं, सांकल्पेन विधिना वरणश्राद्धं, कलशस्थापन पूर्वक स्वस्ति पुण्याहवाचनादीनि करिष्ये ॥ इत्यंगसंकल्प क्रमेण कर्म समाप्य ॥ पुनः साक्षत जलमादाय अद्येत्यादि० अस्मिन् मंडले ब्रह्मादि देवानां स्थापन प्रतिष्ठा पूजामहं करिष्ये ॥ वामहस्ते अक्षतान् गृहीत्वा ॥ **अथ ब्रह्मादि देवता स्थापनं** ॥ **मंडलमध्ये** ॥ एह्येहि सर्वाधिपते सुरेन्द्र मदीय यज्ञे पितृदेवताभिः ॥ सर्वस्यधाता

स्यमित प्रभाव विशालमन्तः सततं शिवाय ॥ १ ॥ ब्रह्मन्निहागच्छ इह तिष्ठ ब्रह्मणे नमः ब्रह्माणं आवाहयामि स्थापयामि ॥ १ ॥ मंडलादुत्तरे सोमं ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्र गणेन सार्द्धं ॥ सर्वौषधिः पितृ-गणेन सार्द्धं गृहाण पूजां भगव न्नमस्ते॥२॥सोम इहागच्छ इहतिष्ठ सोमाय नमः सोमं आवाहयामि स्थापयामि ॥२॥ ईशाने खण्डेन्दौ॥एह्येहि यज्ञेश्वरन त्रिशूल कपाल खट्वांग धरावसार्ध्धम् ॥ लोकेन यज्ञेश्वर यज्ञसिध्यै गृहाण पूजां भगवन्नमस्ते ॥ ३ ॥ ईशान इहागच्छ इहतिष्ठ ईशानायनमः ईशानं आवाहयामिस्था० ॥३॥ पूर्वे इन्द्रम्॥ एह्येहि सर्वामरसिद्धसाध्यै रभिष्टुतो वज्रधरामरेश ॥ सविज्यमानो प्सरसांगणेन रक्षाध्वरंनो भगवन्नमस्ते ॥ ४ ॥ इन्द्र इहागच्छ इह तिष्ठ इन्द्राय नमः इन्द्रं आ०स्था० ॥ ४ ॥ आग्नेयां खण्डेन्दौ ॥ अग्निम् ॥ एह्येहि सर्वामरहव्य वाह मुनिप्रवीरै रभितोभि गुप्तम्॥ तेजोबलैर्लोकगणेन सार्द्धं ममाध्वरं रक्ष नमोऽस्तुतेऽग्ने॥५॥अग्ने इहागच्छ इह-तिष्ठ ॥ अग्नये नमः अग्निं आ० स्था० ॥ ५ ॥ दक्षिणे यमं ॥ एह्येहि वैवस्वत धर्मराज सर्वामरै रर्चित धर्ममूर्ते ॥ शुभाशुभानंद शुचामधीश शिवाय नः पाहि मखं नमस्ते ॥ ६ ॥ यम इहागच्छ इहतिष्ठ ॥ यमाय नमः यमं आ० स्था० ॥ ६ ॥ नैरृत्यां खण्डेन्दौ निर्ऋतिम् ॥ एह्येहि रक्षो गणनायकत्वं विशाल वैताल पिशाच संघैः

ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरत्वं प्रणमामि नित्यं ॥ ७ ॥ निर्ऋते इहागच्छ इहतिष्ठ ॥ निर्ऋतये नमः निर्ऋति मावाहयामि० स्था० ॥ ७ ॥ पश्चीमे वरुणं ॥ एह्येहि यज्ञे ममरक्षणाय यादोगणैः सार्ध मपामधीश ॥ झषाधिरुढ त्वमिहप्रभोमणि रत्नप्रभा भास्वर पाशपाणे ॥ ८ ॥ वरुण इहागच्छ इहतिष्ठ ॥ वरुणाय नमः वरुण मावाहयामि स्था० ॥ ८ ॥ वायव्यां खण्डेन्दौ वायुं ॥. एह्येहि यज्ञे ममरक्षणाय मृगाधिरुढः सहसिद्ध संघैः प्राणाधिपो हव्यभुजः सहाय गृहाणपूजां भगवन्नमस्ते ॥ ९ ॥ वायो इहागच्छ इहतिष्ठ वायवे नमः वायुमावाहयामि स्था० ॥ ९ ॥ वायुसोमयोर्मध्ये भद्रे अष्टवसून ॥ एह्येहिवस्वीश महानिधीश रत्नाकरः सर्व सहस्रतेजाः ॥ धनस्वरुपो ममयज्ञपातुं गृहाण पूजां भगवन्नमस्ते ॥ १० भो अष्टवसवः इहागच्छत इहतिष्ठत अष्टवसुभ्यो नमः अष्टवसूनावाहयामि स्था० ॥ १० ॥ सोमे शानयोर्मध्ये एकादश रुद्रान् ॥ एह्येदि यज्ञेश्वर भो त्रिशूल कपाल खट्वाङ्ग वरेण सार्द्ध ॥ लोकेन विश्वेश्वर यज्ञसिध्यै गृहाणपूजां भगवन्नमस्तेः ॥ ११ ॥ एकादशरुद्राः इहागच्छत इहतिष्ठत एकादशरुद्रेभ्यो नमः एकादशरुद्राना० ॥ ११ ॥ इशानेन्द्रयोर्मध्ये भद्रे द्वादशादित्यान् ॥ एह्येहि पद्मासन पद्मपाणे सुरक्तसिन्दूर समान वर्ण ॥ ससाश्वरक्ताम्बर सूर्यशीघ्रं गृहाण पूजां भगवन्नमस्ते ॥ १२ ॥ द्वादशा-

दित्याः इहागच्छत इहतिष्ठत द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि स्था० ॥ १२ ॥ इन्द्राग्न्योर्मध्ये भद्रे अश्विनौ ॥ द्विभुजौ देवभिषजौ कर्तव्यौ देवसंयुतौ ॥ तयो रोषधयः कार्यादिव्या दक्षिणहस्तयोः ॥ १३ ॥ अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥ अश्विभ्या नमः अश्विनौ आवाहयामि स्था० ॥ १३ ॥ अग्नियमयोर्मध्ये भद्रेःसपैतृकान्विश्वान् देवान् ॥ एह्येहि सर्वामर सिद्धसाध्यै रभिष्टुतो वज्रधरामरेश ॥ संवीज्यमानोऽप्सरसांगणेन रक्षाध्वरं नो भगवन्नमस्ते॥१४॥सपैतृकाः विश्वदेवाः इहागच्छत इहतिष्ठत सपैतृकविश्वेभ्यो देवेभ्यो० सपैतृकान् विश्वान् देवानावाहयामि स्था० ॥ १४ ॥ यम नैऋतयोर्मध्ये भद्रे सप्त यक्षान् ॥ एह्येहि रक्षो गणनायकत्वं विशाल वैताल पिशाच संघैः ॥ ममाध्वरंपाहिशिवाधिनाथ लोकेश्वरत्वं भगवन्नमस्ते ॥ १५ ॥ सप्तयक्षाः इहागच्छत इहतिष्ठत ॥ सप्तयक्षेभ्यो नमः सप्तयक्षानावाहयामि स्था० ॥ १५ ॥ निर्ऋतिवरुणयोर्मध्ये भद्रे सर्पान् ॥ एतेतसर्पाः शिवकंठ भूषा लोकोपकाराय भुवं वहन्तः॥जिव्हाद्वयोपेत मुखामदीयां गृह्णीतपूजां सुखदां नमो वः ॥ १५॥ सर्पाः इहागच्छत इह तिष्ठत ॥ सर्पेभ्यो नमः सर्पानावाहयामि स्था० ॥ १६ ॥ वरुणवाययोर्मध्ये भद्रे गन्धर्वाप्सरसान् ॥ आवाहयेहं सुरदेवसेव्याः स्वरुपतेजो मुखपद्म भासः ॥ सर्वामरेशैः परिपूर्णकामाः पूजां

गृहीतुं मम यज्ञ भूमौ॥१७॥गन्धर्वाप्सरसः इहागच्छत इहतिष्ठतः गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवाहयामि स्था० ॥ १७ ॥ ब्रह्मसोमयोर्मध्ये त्राणोपरिस्कंदं ॥ एह्येहि देवेश्वरशंभुसूनो शिखिन्द्रगामिन्सुरसिद्ध संघैः ॥ संस्तूयमानात्मशुभायनित्यं गृहाण पूजां भगवन्नमस्ते ॥ १८ ॥ स्कन्द इहागच्छ इहतिष्ट स्कन्दाय नमः स्कन्दमावाहयामि स्था० ॥ १८ ॥ तदुत्तरतः नन्दीश्वरं ॥ एह्येहि देवेन्द्रपिनाकपाणे खण्डेन्दुमौलि प्रियशुभ्र वर्ण ॥ गौरीशयानेश्वर यक्षसिद्धे गृहाण पूजां भगवन्नमस्ते ॥१९॥ नन्दीश्वर इहागच्छ इहतिष्ट नन्दीश्वराय नमः नन्दीश्वरमावाहयामि स्था० ॥ १९ ॥ तदुत्तरतः ॥ शूलमहाकालौ ॥ आयात मायात मुमा प्रियस्य प्रियौमुनीन्द्रादिकसिद्धसेव्यौ ॥ गृह्णीतमेतां ममशूलकालौ पूजां सुखौघं कुरुतं नमोवाम् ॥२०॥ शूलमहाकालौ इहागच्छतं इहतिष्ठतम् ॥ शूलमहाकालाभ्यांनमः शूलमहाकालौ आवाहयामि स्था०॥ २० ॥ ब्रह्मेशानयोर्मध्ये वल्लीपु दक्षादि सप्तकान् ॥ एह्येहि देवालयविश्वमूर्ते चतुर्मुख श्रीधर शंभुमान्य ॥ सुपुस्तकाक्ष स्रुवपात्रपाणे गृहाण पूजां भगवन्नमस्ते ॥ २१ ॥ दक्षादि सप्तकाः इहागच्छत इहतिष्ठत दक्षादिसप्तकेभ्योनमः दक्षादिसप्तकानावाहयामि स्था० ॥ २१ ॥ ब्रह्मेन्द्रयोर्मध्ये वाप्यां ( त्राणोपरि ) दुर्गाम् ॥ एह्ये हि दुर्गे दुरितौघनाशिनि प्रचण्ड

दैत्यौघ विनाशकारिणी ॥ उमे महेशार्द्धे शरीरधारिणी स्थिराभवत्वं मम यज्ञकर्मणि ॥२२॥ दुर्गे इहागच्छ इहतिष्ठ दुर्गायै नमः दुर्गामावाहयामि स्था० ॥ २२॥ तदुत्तरतः ॥ विष्णुं ॥ एह्येहि नीलाम्बुदमेचकत्वं श्रीवत्सवक्षःकमला धिनाथ ॥ सर्वामरैः पूजितपादपद्म गृहाण पूजां भगवन्नमस्ते ॥ २३ ॥ विष्णो इहागच्छ इहतिष्ठ विष्णवेनमः विष्णुमावाहयामि स्था० ॥ २३ ॥ ब्रह्माऽग्न्योर्मध्ये वल्लीषु स्वधाम् ॥ सुखाय पितॄन् कुलवृद्धिकर्तॄन् रक्तोत्पलाभानिहरक्तनेत्रान्॥सुरक्त माल्याम्बरभूषितां श्चनमामि पिठे कुलवृद्धिहेतोः॥२४॥स्वधे इहागच्छ इहतिष्ठ स्वधायै नमः स्वधामावाहयामि स्था०॥२४॥ ब्रह्मयमयोर्मध्ये वाप्यां ( बाणोपरि ) मृत्युरोगौ ॥ आवाहयाम्यहंरोग मनेकविधलक्षणम्॥नानालंकारसंयुक्तं रक्तश्मश्रु विलोचनम् ॥२५॥ मृत्युरोगौ इहागच्छतम् इहतिष्ठतम्॥मृत्युरोगाभ्यां० मृत्युरोगौ आवाहयामि स्था० ॥ २५ ॥ ब्रह्मनैर्ऋतयोर्मध्ये वल्लीषु ॥ गणपतिं ॥ एह्येहि विघ्नाधिपते सुरेन्द्र ब्रह्मादिदेवैरभिवन्द्यपाद ॥ गजास्य विद्यालय विश्वमूर्ते गृहाण पूजां भगवन्नमस्ते ॥२६॥ गणपते इहागच्छ इहतिष्ठ गणपतये नमः गणपतिमावाहयामि स्था० ॥ २६ ॥ ब्रह्मवरुणयोर्मध्ये वाप्यां ( बाणोपरि ) अपः ॥ एह्येहि लोकेश्वर पाशपाणे यादोगणैर्वन्दित पादपद्म ॥ पीठेत्रदेवेश गृहाण पूजां पाहित्वमस्मान् भगवन्-

मस्ते ॥२७॥ आपः इहागच्छत इहतिष्ठत अद्भ्यो० अपः आवाहयामि स्था० ॥ २७ ॥ ब्रह्मवायवोर्मध्ये वह्निपु ॥ मरुतः ॥ एह्येहि यज्ञेश समीरणत्वं मृगाधिरूढे सहसिद्धसंघैः ॥ प्राणस्वरूपिन्सुखतासहाय गृहाण पूजां भगवन्नमस्ते ॥२८ ॥ मरुतः इहागच्छत इहतिष्ठत ॥ मरुद्भ्यो० मरुतः आ० ॥ २८ ॥ ब्रह्मणः पादमूले कर्णिकाधः पृथिवीम् ॥ एह्येहि पातालचराचरेन्द्र नागांगना किंनर गीयमान ॥ यक्षोनगेन्द्रामरलोकसंघैर नन्तरक्षाध्वर-मस्मदीयम् ॥२९ ॥ पृथिवी इहागच्छ इहतिष्ठ पृथिव्यैनमः पृथिवीमावाहयामि स्था०॥ २९ ॥ तदुत्तरतः गंगादि-नदीः ॥ एह्येहि गंगे दुरितौघनाशिनि झपाधिरूढे उदकुम्भहस्ते ॥ श्री विष्णुपादाम्बुजसंभवे त्वं पूजां गृहीतुं शुभदे नमस्ते ॥ ३० ॥ गंगादिनद्यः इहागच्छत इहतिष्ठत गंगादिनदीभ्योनमः गंगादिनदीः आवाहयामि स्था० ॥ ३० ॥ तदुत्तरतः ॥ सप्तसागरान् ॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरे न्द्राऽमरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते॥३१॥ सप्तसागराःइहागच्छत इहतिष्ठत सप्तसागरेभ्योनमःसप्तसागर-नावाहयामि स्था० ॥ ३१ ॥ ततः कर्णिकोपरि ॥ मेरुं ॥ एह्येहि कार्तस्वरूपसर्व भूभृतपते चन्द्ररवी दधानः ॥ सर्वौषधिस्थान महेन्द्रमित्र लोकत्रयावास नमोस्तु तुभ्यम् ॥३२॥मेरो इहागच्छ इहतिष्ठ मेर वेनमः मेरुमा० ॥३२॥

ततः सोमादि संन्निधौ क्रमेण आयुधान्यावाहयेत् ॥ तद्यथा सोमसमीपे ॥ गदां ॥ निपिक्ता कुमुदाक्षस्य नाम्ना कौमोदकी गदा॥ शांतिदा स्मरणादेव तस्यै तुभ्यं नमोनमः॥ गदे इहागच्छ इहतिष्ट ॥२३॥ गदायैनमः गदामावाहयामि स्था० ॥ २२ ॥ ईशान्यां त्रिशूलम् ॥ महायोगीन्द्र हस्तस्थ शंकरस्य प्रियंकरः ॥ त्रिशूलत्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥२४॥ त्रिशूल इहागच्छ इहतिष्ट त्रिशूलायनमः त्रिशूलमावाहयामि स्था०॥२४॥ इन्द्रसमीपे ॥वज्रं॥तप्तकाञ्चनवर्णाभं वज्रं वै शस्त्रनायकम्॥ आवाहयामि यज्ञेस्मिन् गृहाणेमं नमोस्तुते ॥२५॥ वज्र इहागच्छ इहष्ठित वज्रायनमः वज्रमावाहयामि स्थापयामि ॥२५॥अग्निसमीपे शक्तिं॥सर्व दैत्यविनाशाय सर्वकामफलप्रदे॥ सर्वसत्वहितेशक्ते शांति यच्छ नमोस्तुते ॥२६॥ शक्ते इहागच्छ इहतिष्ठ शक्तयेनमः शक्तिमावाहयामि स्था०॥२६॥ यमसमीपे दण्डम्॥ धर्मराजस्य हस्तस्य यमस्य च सदाप्रियः॥ दण्डायुधनमस्तेस्तु सर्वसिद्धिप्रदोभव ॥२७॥ दण्ड इहागच्छ इहतिष्ठदण्डायनमः दण्डमावाहयामि स्थापयामि० ॥ २७ ॥ निर्ऋति समीपे खड्गम् ॥ नीलजीमूतवर्णत्वं तीक्ष्णदंष्ट्र कृशोदर॥ खड्गराजनमस्तुभ्यं पूजेयं प्रतिगृह्यताम् ॥ २८ ॥ खड्ग इहागच्छ इहतिष्ठ खड्गायनमः खड्गमावाहयामि स्था० ॥ २८ ॥ वरुण समीपे पाशम् ॥ देवासिवरुणास्त्रत्वं दैत्यवंश विदारण ॥ पाशमां समरे रक्ष

रज्जुराज नमोस्तुते ॥३९॥ पाश इहागच्छ इहतिष्ठ पाशायनमः पाशमावाहयामि स्था० ॥ ३९ ॥ वायुसमीपे अंकुशं ॥ गजघ्नं परवीरघ्नं परसैन्यापहारकम् ॥ गणेशस्य प्रियंनित्यमंकुशायनमोनमः ॥ ४० ॥ अंकुश इहागच्छ इहतिष्ठ ॥ अंकुशायनमः अंकुशमावाहयामि स्था० ॥ ४० ॥ तद्वाह्ये ॥ गौतमादीन् ॥ उत्तरे गौतमम् ॥ गौतमः सर्वभूताना मृषीणां च सदाप्रियः ॥ श्रौतानां कर्मणां. चैव संप्रदाय प्रवर्त्तकः ॥४१॥ गौतम इहागच्छ इहतिष्ठ गौतमायनमः गौतममावाहयामि स्था० ॥ ४१ ॥ ईशाने ॥ भरद्वाजं ॥ भरद्वाजनमस्तेस्तु सदाध्ययन तत्पर ॥ आवाहयामि यज्ञेस्मिन् पूजेयं प्रतिगृह्यताम् ॥४२॥ भरद्वाज इहागच्छ इहतिष्ठ भरद्वाजायनमः भरद्वाज मावाहयामि स्था० ॥ ४२ ॥ पूर्वे ॥ विश्वामित्रम् ॥ विश्वामित्र नमस्तुभ्यं ज्वलदग्नि समप्रभा ॥ अध्यक्षी कृत गायत्री तपोरूपेण संस्थितः ॥ ४३ ॥ विश्वामित्र इहागच्छ इहतिष्ठ विश्वामित्रायनमः विश्वामित्रमावाहयामि स्था० ॥ ४३ ॥ आग्नेय्याम् ॥ कश्यपम् ॥ कश्यपः सर्वलोकाढ्यः सर्वभूत दयाकरः ॥ आसित्वां प्रार्थयामीश पूजेयं प्रतिगृह्यताम् ॥४४॥ कश्यप इहागच्छ इहतिष्ठ कश्यपायनमः ॥ कश्यपमावाहयामि स्था०॥ ४४ ॥ दक्षिणे जमदग्निम् ॥ जमदग्निर्महातेजा स्तपसा ज्वलतीहतम् ॥ आवाहयामि यज्ञेतत्पूजेयं प्रतिगृह्यताम् ॥ ४५ ॥ जमदग्ने

इहागच्छ इहतिष्ठ जमदग्नयेनमः जमदग्निमावाहयामि स्था० ॥ ४५ ॥ नैर्ऋत्याम् ॥ वसिष्ठम् ॥ नमस्तुभ्यं व-
सिष्ठाय कर्मकर्त्रेमहामुने ॥ धर्मरुपाय महते लोकानां हितकारिणे ॥४६॥वसिष्ठ इहागच्छ इहतिष्ठ वसिष्ठायनमः
वसिष्ठमावाहयामि स्था० ॥ ४६ ॥ पश्चिमे ॥ अत्रिं ॥ अत्रये तु नमस्तुभ्यं सर्वलोक हितैषिणे ॥ तपोरुपाय
सत्याय ब्रह्मणे मित तेजसे ॥ ४७॥ अत्रे इहागच्छ इहतिष्ठ अत्रयेनमः अत्रिमावाहयामि स्था० ॥ ४७ ॥ वाय-
व्याम् ॥ अरुन्धतीम् ॥ अरुन्धत्यै नमस्तुभ्यं सर्वसौख्य प्रदायिनि ॥ एहिमण्डलमध्येते नमः पूजां गृहाणमे ॥
॥४८॥ अरुन्धती इहागच्छ इहतिष्ठ अरुन्धत्यैनमः अरुन्धतीमावाहयामि स्था० ॥ ४८ ॥ तद्बाह्ये पूर्वादारभ्यै
न्द्र्यादीन् ॥ पूर्वे ॥ ऐन्द्रीम् ॥ इन्द्राणीं गजकुंभस्थां सहस्र नयनोज्वलाम् ॥ नमामि वरदां देवीं सर्व देवैर्नम-
स्कृताम् ॥४९॥ ऐन्द्रि इहागच्छ इहतिष्ठ ऐन्द्र्यैनमः ॥ ऐन्द्रीमावाहयामि स्था० ॥४९॥ आग्नेयाम् ॥ कौमारीम् ॥
एह्येहि कौमारिविधेहि शान्तिं शक्तिं दधानेपिसदासिमध्ये ॥ स्कन्धाधिरूढे शिखिपुंगवाभ्यां मातः प्रसाद प्र-
सृतिं प्रयच्छ ॥५०॥ कौमारि इहागच्छ इहतिष्ठ कौमार्यैनमः कौमारीमावाहयामि स्था० ॥५०॥ दक्षिणे ब्राह्मीम् ॥
चतुर्मुखीं जगद्धात्रीं हंसारूढांवरप्रदाम् ॥ सृष्टिरूपां महाभागां ब्रह्माणीं तां नमाम्यहम् ॥ ५१ ॥ ब्राह्मि इहागच्छ

इहतिष्ठ ॥ ब्राह्म्यैनमः ब्राह्मीमावाहयामि स्था० ॥ ५१ ॥ नैर्ऋत्याम् ॥ वाराहीम् ॥ वाराहरूपिणीं देवीं दंष्ट्रोद्धृत वसुन्धराम् ॥ शुभदां पीतवसनां वाराहीं तां नमाम्यहम् ॥५२॥ वाराहि इहागच्छ इहतिष्ठ वाराह्यैनमः वाराहीमावाहयामि स्था० ॥ ५२ ॥ पश्चिमे चामुण्डाम् ॥ चामुण्डा मुण्डमथनां मुण्डमालोपशोभिताम् ॥ अट्टाट्टहासमुदितां नमाम्यात्म विभूतये ॥ ५३ ॥ चामुण्डे इहागच्छ इहातिष्ठ चामुण्डायैनमः चामुण्डामावाहयामि स्था० ॥ ५३ ॥ वायव्यां वैष्णवीम् ॥ शंखचक्रगदापद्म धारिणीं कृष्णरूपिणीम् ॥ स्थितिरूपां खगेन्द्रस्थां वैष्णवीं तां नमाम्यहम् ॥५४॥ वैष्णवि इहागच्छ इहतिष्ठ वैष्णवैनमः वैष्णवीमावाहयामि स्था०॥५४॥उत्तरे ॥ माहेश्वरीम् ॥ माहेश्वरीं नमाम्यद्य सृष्टिसंहार कारिणीम्॥वृषारूढां शुभां शुभ्रां त्रिनेत्रांवरदां शिवाम् ॥५५॥ माहेश्वरि इहागच्छ इहतिष्ठ माहेश्वर्यैनमः माहेश्वरीमावाहयामि स्था० ॥ ५५ ॥ ईशाने ॥ वैनायकीम् ॥ चतुर्भुजां त्रिनेत्रां च सर्वाभरणभूषिताम् ॥ आवाहयामि देवेशीं पूजेयं प्रतिगृह्यताम् ॥५६॥ वैनायकि इहागच्छ इहतिष्ठ वैनायक्यैनमः वैनायकीमावाहयामि स्था० ॥ ५६ ॥ हस्ते अक्षतान् गृहीत्वा ॥ मंत्रः ॥ प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां वः करोम्यत्र मंडले देवतैः सह ॥ ब्रह्माद्यावाहितदेवाः सांगाः सपरिवाराः सुप्रतिष्ठिताः वरदा

भवत ब्रह्माद्यावाहितदेवेभ्योनमः आवाहनं समर्पयामि० ॥ ब्रह्माद्या०आसनं स० ॥ ब्रह्माद्या० पाद्योः पाद्यं स० ॥ ब्रह्माद्या० हस्तयोः अर्घ्यं स० ब्रह्माद्या० आचमनीयं स० ॥ ब्रह्माद्या० स्नानं स० ब्रह्माद्या० वस्त्रं स० ब्रह्माद्या० यज्ञोपवितं स० ब्रह्माद्या० चंदनं स० ब्रह्माद्या० अलंकरणार्थे अक्षतान् स० ब्रह्माद्या० पुष्पं स० ब्रह्माद्या० धूपं स० ब्रह्माद्या० दीपं स० ब्रह्माद्या० नैवेद्यं स० ब्रह्माद्या० तांबूलं स० साद्गुण्यार्थे दक्षिणां स० ब्रह्माद्या० प्रदक्षिणां स० ब्रह्माद्या० पुष्पांजलीं स० ॥ अनेन पूजनेन ब्रह्माद्याः प्रीयंतां नमम ॥ स्वाग्रे धान्य राशिं कुर्यात ॥ तदुपरि रौप्यमयान्वा ताम्रमया न्यथाविधिनाकलशान्संस्थाप्य तेषु जलादिनि उक्तपदार्थादीनि विधिना निक्षिपेत् ॥ तद्यथा ॥ विश्वाधारासीती मंत्रेण भूमिं स्पृष्ट्वा ॥ विश्वाधारासि धरणी शेषनागोपरि स्थिता ॥ उद्धृताशिवराहेणकृष्णेन शतबाहुना ॥ भूम्यै नमः ॥ हेमरोप्यादि मंत्रेण कलशस्थापनं ॥

---

अर्थ–उपर लख्याप्रमाणे ब्रह्मादीनुं आवाहन स्थापन थया पछी, जमणा हाथमां चोखा लइने प्रतिष्ठानो [illegible] ब्राह्मणभणे पछी बधा स्थापन करेला देवताओपर चोखा वधावी केहेवुं ( प्रतिष्ट एटले स्थिररहो. पछी ब्रह्माद्यावाहित देवेभ्योनमः एवो उद्द लइ षोडशोपचारे अथवा पंचोपचारे पूजा करवी. ब्रह्मादीनुं पूजन थया पछी जे कलशो लाव्या होय तेनुं तेना मंत्रो भणी विधिवत् स्थापन करवुं.

हेमरौप्यादि संभूतं ताम्रजं सुदृढं नवं ॥ कलशं धौतकल्माषं छिद्रवर्ण विवर्जितं ॥ सूत्रंकार्पासेति मंत्रेण रक्त सूत्र वेष्टनं ॥ सूतंकार्पाश संभूतं ब्रम्हणा निर्मितं पुरा ॥ येनबद्धं जगत्सर्वं वेष्टनं कलशस्य च ॥ जीवनं सर्वेति मंत्रेणजलपूरणं ॥ जीवनं सर्वजीवानां पावनं पवनात्मकं ॥ बीजं सर्वोषधीनां च तज्जलं पूरयाम्यहम् ॥ देवेभ्यः इतिमंत्रेण सर्वोपधी चंदनं च प्रक्षिप्य ॥ देवेभ्यः पूर्वतोजाता देवेभ्यः स्त्रियुगं पुरा ॥ शतं तनू च या बभ्रू जीवनं जिवनाय च ॥ दूर्वे ह्यमत इति मंत्रेण दुर्वां ॥ दूर्वे ह्यमृतसंपन्ने शतमूले शतांकुरे ॥ शतं पातकसंहर्त्री शतमायुष्य वर्द्धिनी ॥ विविधं पुष्पेति मंत्रेण पंचपल्लवान् ॥ पुष्पं च ॥ अश्वत्थोदुंबर प्लक्ष न्यूतन्यग्रोध पल्लवाः ॥ पंचभंगा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥ विविधं पुष्पसंजातं देवानां प्रीतिवर्द्धनं ॥ क्षिप्तं यत्कार्यसंभुतं कलशे प्रक्षिपाम्यहम् ॥ धान्यौपधीति मंत्रेण धान्यं ॥ धान्यौपधी मनुष्याणां जीवनं परमं स्मृतं ॥ क्षिप्तं यत्कार्यसंभूतं कलशे प्रक्षिपाम्यहम् ॥ पूगीफलेति मंत्रेण पूगीफलं ॥ पूगीफलमिदं दिव्यं पवित्रं पापनाशनं ॥ पुत्रपौत्रादि फलदं कलशे प्रक्षिपाम्यहम् ॥ हिरण्यगर्भेति हिरण्यं ॥ हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः ॥ अनंत पुण्य फलदमतः शांति प्रयच्छ मे ॥ अश्वस्थानादिति मंत्रेण सप्तमृत्तिका निक्षिपेत् ॥ अश्वस्थाना द्गजस्थाना द्वल्मीका

त्संगमा हृदात् ॥ राजद्वारा च्च गो गोष्ठा न्मृदमानीय निक्षिपेत् ॥ कनकं कुलिशेति मंत्रेण पंचरत्नं वा सुवर्ण वा यथाशक्ति रौप्यं निक्षिपेत ॥ कनकं कुलिशं नीलं पद्मरागंच मौक्तिकं ॥ एतानि पंचरत्नानी कलशे प्रक्षिपाम्यहम् ॥ पिधानं सर्वेति मंत्रेण धान्यसहित पूर्णपात्रं ॥ पिधानं सर्वं वस्तूनां सर्व कार्यार्थ साधनं ॥ संपूर्ण कलशो येन पात्रं तत्कलशोपरि ॥ इति मंत्रेण पूर्णपात्रं निधाय ॥ मंडलमध्ये ॥ **प्रधान कलशं** ॥ चतुर्दिक्षुचतु र्व्यूह कलशान् संस्थाप्य ॥ तदुपरि क्षौमवस्त्रं प्रसार्य तदुपरि यंत्रं निधाय ॥ ततः मंडलपरितः त्रिंशद्कुंभान् संस्थाप्य ॥ ततो मूर्तिनां ॥ **अग्न्युत्तारणं कुर्यात्** ॥ ततः सूवर्णमयी मूर्तीनां ताम्रपात्रे

---

अर्थ—पूर्णपात्रसुधीनुं कलशस्थापन थया पछी मंडलना वचमां प्रधाननो कलश मुकवों तथा चार दिशाए व्युह कलश गोठवया,तथा तेमना उपर रेशमी कपडाओ पाथरवा, पछी मंडलनी चारे बाजुये ( ३० ) त्रीस घडाओ मुकवा [illegible] तेनाउपर वस्त्र मुकवा. पछी राधापुरुषोत्तमनी तथा चारव्युहनी तथा त्रीस बीजा देवताओनी मुरतीओ एक पात्रमां मुकवी तथा तेनाउपर गायनुं दुध दहिं घी छाण मुतर तथा दर्भ विगेरे मुकी अग्न्युत्तारण पूर्वक प्राणप्रतिष्ठा करवी तेमां पहेला संकल्प करवो के अमुक दोषो दूरकरवा प्राणप्रतिष्ठा करुं. छतुं पछी मुर्तीपर पाणीनीधार पाड्याकरवी ब्राह्मणभणेत्यां सुधी पछी ब्राह्मणना हाथमां ते पात्र आपी तेनीपासे प्राणप्रतिष्ठा करावनी प्राणप्रतिष्ठा थया पछी स्नानकरावबुं.

स्थापनं कृत्वा ॥ अग्न्युत्तारण पूर्वकप्राणप्रतिष्ठां कुर्यात ॥ अद्येत्यादि० आसांमूर्तीनां अंग प्रत्यंग सन्धिसमुत्पन्नं कुद्दालकादिटंकाद्यातपाभि संयोग जनित दोष परिहारार्थं अग्न्युत्तारण पूर्वकं ब्राह्मणद्वारा प्राणपतिष्ठां करिष्ये ॥ मूर्तिं घृतेनाभ्यज्य ॥ उपरि जलधारां कुर्यात ॥ मंत्रः ॥ अग्निर्वैश्वानरोवन्हि वीतिहोत्रो धनंजयः ॥ अग्न्युत्तारणार्थाय मूर्तीनां शुद्धि हेतवे ॥ त्रिवारं पठेत् ॥ रक्तांभोधिस्थपोतो लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदंडमिक्षुद्भवमथगुणमप्यंकुशंपंचबाणान् ॥ बिभाणासृकपालं त्रिनयनविलसत् पीनवक्षो रुहाढ्या देवीबालार्कवर्णा भवतु सुखकरी प्राणशक्तिःपरानः ॥ इति मंत्रेणाग्न्युत्तारणं ॥ ततः प्राणपतिष्ठां कुर्यात ॥ अस्यश्री प्राणप्रतिष्ठामंत्रस्य ब्रह्मा विष्णु महेश्वराऋषय. ऋग्यजुः सामानि छंदांसि जगत्सृष्टिकारिणी प्राणशक्ति देवता ॥ आं बीजं ऱ्हीं शक्तिः क्रौं किलकं आसां मूर्तिनां प्राणप्रतिष्ठापने विनियोगः॥ मूर्तिषु हस्तं निधाय ॥ पठेत॥ आं ऱ्हीं क्रौं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोहं ॥ आसां मूर्तीनां प्राणा इह प्राणाः ॥ पुनः आं ऱ्हीं क्रौं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोहं ॥ आसां मूर्तीनां जीव इह स्थितः ॥ पुनः आं ऱ्हीं क्रौं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोहं ॥ आसां मूर्तीनां सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वा घ्राण पाणि पाद पायूपस्थानि इहे-

वागत्य सुखं चिरं तिष्ठन्तु नमः ॥ गर्भाधानादि षोडश संस्कारसिध्यर्थं शोडषप्रणवावृत्तिं करिष्ये ॥ ह्रीं इति षोडशवारं उच्चरेत् ॥ अनेन षोडशसंस्काराःसंपद्यंताम् तत् ॥मूर्ति पात्रं कलशोपरिस्थापइत्वा ॥ परिवार देवताना वाहयेत् ॥ हस्ते अक्षतान् गृहीत्वा ॥ **मंडुकायनमः** ॥ कालाग्निरुद्रायनमः ॥ आधारशक्त्यैनमः ॥ कूर्मायनमः ॥ अनंतायनमः ॥ मूलप्रकृत्यैनमः ॥ पृथिव्यैनमः ॥ श्वेताद्वीपायनमः ॥ कल्पवृक्षायनमः ॥ रत्नमण्डपायनमः ॥ सिंहासनायनमः ॥ इति मध्ये ॥ प्रागादि दिक्षु ॥ धर्मायनमः ॥ ज्ञानायनमः ॥ वैराग्याय नमः ॥ ऐश्वर्यानमः ॥ आग्नेयादिकोणेषु ॥ अधर्मायनमः ॥ अज्ञानायनमः॥अवैराग्यायनमः॥अनैश्वर्यायनमः॥ मध्ये ॥ आत्मनेनमः ॥ अंतरात्मनेनमः ॥ परमात्मनेनमः॥ज्ञानात्मनेनमः ॥ अग्निमंडलायनमः॥ सोममंडलाय नमः ॥ संसत्वायनमः ॥ रंरजसेनमः ॥ तंतमसेनमः ॥ सर्वशक्तिकमलासनायनमः ॥ मंडुकाद्यावाहित देवताः सुप्रतिष्ठताः वरदाः भवत ॥ मंडुकाद्यावाहितानाम् लाभोपहारैर्वा पंचोपचारैः पूजनं ॥पुन र्हस्ते अक्षतान् गृहीत्वा

---

पछी ते मुनियो तेमना स्थानोपर मुकावीदेवी पछी प्रधान देवनो यत्र कादी पीठपर मुकवो तथा तेमना परिवार देवताओनुं स्थापन करवुं. तेनाउपर चोखा पधाव्या करवा. पछी मंडुकादीनुं पुजन थया पछी यथावकाश बीजा देवतासहित राधापुरुषोत्तमनुं तेमनी जगाउपर स्थापन करवुं.

॥ **मध्ये** ॥ राधिका सहित पुरुषोत्तमायनमः ॥ राधिकासहित पुरुषोत्तममावाहयामि स्था० ॥ तत **श्चतुर्दिक्षु** ॥ कलशेषु ॥ पूर्वे ॥ वासुदेवायनमः वासुदेवमावाह्यामि स्था० ॥ दक्षिणे हलधरायनमः हलधरमावाहयामि स्था० पश्चिमे ॥ प्रद्युम्नायनमः प्रद्युम्नमावाहयामि स्था० ॥उत्तरे ॥अनिरुद्धायनमः अनिरुद्धमावाहयामि स्था० ॥ ततःत्रिंशत **कुंभोपरि** मुर्ति वा नालिकेरं, निधाय ॥तदुपरि पूर्वादि क्रमेण देवानावाहयेत ॥ जिष्णवेनमः जिष्णुमा० ॥ १ ॥ विष्णवेनमः विष्णुमा० ॥ २ ॥ महाविष्णवे नमः महाविष्णुमा० ॥ ३ ॥ हरयेनमः हरिमा० ॥ ४ ॥ कृष्णायनमः कृष्णंमा० ॥ ५ ॥ अधोक्षजायनमः अधोक्षजमा० ॥ ६ ॥ केशवायनमः केशवमा० ॥ ७ ॥ माधवायनमः माधवमा० ॥ ८ ॥ रामायनमः राममा० ॥ ९ ॥ अच्युतायनमः अच्युतमा० ॥ १० ॥ पुरुषोत्तमायनमः पुरुषोत्तममा०॥ ११ ॥ गोविंदायनमः गोविंदमा०॥ १२ ॥ वामनायनमः वामनमा० ॥ १३ ॥ श्रीशायनमः श्रीशमा०॥१४॥श्रीकण्ठायनमः श्रीकण्ठमा०॥१५॥विश्वसाक्षिणेनमःविश्वसाक्षिणमा०॥१६॥नारायणायनमः नारायणमा०॥१७॥मधुरिपवेनमःमधुरिपुमा०॥१८॥अनिरुद्धायनमःअनिरुद्धमा॥१९॥त्रिविक्रमायनमः त्रिविक्रममा० ॥२०॥ वासुदेवायनमःवासुदेवमा०॥२१॥जगद्योनयेनमः॥जगद्योनिमा०॥२२॥शेषतल्पगतायनमः

शेपतल्पगतमा० ॥ २३ ॥ संकर्षणायनमः संकर्षणमा० ॥ २४ ॥ प्रद्युम्नायनमः प्रद्युम्नमा० ॥ २५ ॥ दैत्यारयेनमः दैत्यारिमा० ॥ २६ ॥ विश्वतोमुखायनमः विश्वतोमुखमा० ॥ २७ ॥ जनार्दनायनमः जनार्दनमा० ॥ २८ ॥ धराधारायनमः धराधारमा० ॥ २९ ॥ श्रीधरायनमः श्रीधरमा० ॥ ३० ॥ एवंदेवान् कुंभोपरि आवाह्य ॥ प्रतिष्ठा सर्वदेवानां मित्रा वरुण निर्मिता ॥ प्रतिष्ठां तां करोम्यत्र मंडले देवतैः सह ॥ श्रीराधिकासहित पुरुषोत्तमाद्यावाहित देवाः सुप्रतिष्ठिताः वरदाःभवतः ॥ प्रतिष्ठान्ते इदमंत्रचंदनं च पुष्पं ॥ श्रीराधिकासहित पुरुषोत्तमाद्यावाहितदेवेभ्यो नमः ॥ गंधंसमर्पयामि ॥ पुष्पं० धूपं० दीपं० नैवेद्यं ॥ पंचोपचारैः वा यथाशक्ति पूजनं कृत्वा ॥ पूर्ववृता ब्राह्मणाश्चतुर्व्यूहजप विष्णुसहस्रनाम पुरुषोत्तमसहस्रनामभिः जपंचकुर्युः ॥ ततो शोडशोपचारैः पूजनमारभेत् ॥ हस्ते पुष्पं गृहीत्वा ॥ ध्यायेत् ॥ श्रीवत्स वक्षसं शांतं नीलोत्पल

---

ए प्रमाणे बधानुं स्थापन थया पछी तेमनी प्रतिष्ठा करी पेछाथी पंचोपचारवडे पूजा करवी पछी पाठकरनारा तथा जपकरनाराओने ते तेमनुं काम सोंपवुं, पछी भगवानना ध्यानथी आरंभी राजोपचार अथवा अवकाश प्रमाणे पूजानो आरंभ करवो, तथा प्रथम भगवाननुं ध्यान करी अवाहनोपचार करी मंत्रभगी आसन आपवुं.

दलच्छवीं॥ त्रिभंगललितं ध्यायेत सराधा पुरुपोत्तमम् ॥१॥ अन्तर्ज्योतिरनन्तरत्नरचिते सिंहासने संस्थितम्॥ वंसी
नाद विमोहिते वृजवधू वृन्दावनेसुंदरं ॥ ध्यायेद्राधिकया सुकौस्तुभमणिं प्रद्योतितोरस्थलं राजद्रत्नकिरीटकु-
ण्डलधरं प्रत्यग्रपीताम्वरम् ॥ आगच्छदेव देवेश श्रीकृष्ण पुरुपोत्तम ॥ राधयासहितश्चात्र गृहाण पूजनं मम॥
विष्णोस्वकीयसदनात सहसिंधुपुत्र्याः सार्धगणैः सुरगणैः परितस्तुवन्हिः ॥ आवाहयामि हृदिपूजयितुं
प्रभोत्वां तद्विश्वनाथ करुणा वरुणालयेही ॥ श्रीराधिकासहित पुरुपोत्तमा यनमः ॥ आवाहनोपचारार्थे अक्षतान्
समर्पयामि ॥ आसनं ॥ माणिक्य मौक्तिक सुविद्रुमपत्रपुष्पैर्हीरेन्द्र नीलमणिमेदककेतु रत्नैः ॥ आधार शक्ति
कमलासन कूर्ममूर्ते दिव्यासनं विरचितं च गृहाण विष्णो ॥ नानारत्नसमायुक्तं कार्तस्वर विभूपीतम् ॥ आसनं
देवदेवेश गृहाण पुरुपोत्तम ॥ श्रीराधिकासहित पुरुपोत्तमायनमः ॥ आसने अक्षतान् समर्पयामि ॥ हस्तेजल-
मादाय मासोत्तमेमासे० श्रीपुरुपोत्तम पूजन कर्माधिकारार्थं तिलक तुलशी धारण पूर्वक शंखघण्टा पूजनं च
करिष्ये ॥ तत्रादौ **तिलकधारणविधिः** ॥ तिलकधारणार्थ यथोक्त मृत्तिकामादाय ॥ वामहस्ते गृहीत्वा ॥
तस्योपरि जलं निक्षिपेत् ॥ श्री किरीट केयूरहार मकरकुण्डल चक्रशंख गदापद्म हस्तपीतांबरधर श्रीवत्सांकित

वक्षस्थल श्रीभूमीसहित स्वात्मज्योतिर्दीप्तिकराय सहस्रादित्यतेजसे नमोनमः ॥ नारायणायइत्यभिमंत्र्य ॥ जल-शायिने नमः ॥ इतिजलं निक्षिप्य ॥ मधुरिपवे नमः ॥ इति संमर्द्य नमो भगवते वासुदेवाय नमः ॥ इति मंत्रेण द्वादशस्थानेषु धारयेत् ॥ यथा ॥ ललाटे केशवायनमः ॥ उदरे नारायणायनमः ॥ वक्षस्थले माधवाय नमः ॥ कंठकूपके गोविन्दायनमः ॥ दक्षिणकुक्षौ विष्णवेनमः ॥ बाहौ मधुसूदनायनमः ॥ कंधरे त्रिविक्रमाय नमः ॥ वामपार्श्वे वामनायनमः ॥ वामबाहौ श्रीधरायनमः ॥ कंधरे हृषीकेशायनमः ॥ पृष्ठे पद्मनाभायनमः ॥ कट्यां दामोदरायनमः ॥ एवंकृत्वा हस्तौ प्रक्षाल्य ॥ तत्तोयं वासुदेवाय नमः ॥ इति मंत्रेण मूर्ध्नि निक्षिपेत् ॥ इति तिलक धारणं ॥ **अथ माला धारणं** ॥ मालां गृहीत्वा ॥ पात्रे निधाय ॥ तदुपरि देवं आवाहयेत् ॥ हस्ते अक्षतान् गृहीत्वा ॥ प्रतिष्ठां कुर्यात् ॥ सर्वशक्ति स्वरूपिणी सिद्धिदात्री इहागच्छ इहतिष्ठ ॥ पूजयेत् ॥

अनामिका कामदोक्ता मध्यमायुष्करी भवेत् ॥ अंगुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मोक्षसाधनी ॥ इति पाद्मे ॥ श्रीरंगे वेंकटाद्रौ च श्रीकूर्मे द्वारके शुभे ॥ प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने ॥ गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह ॥ धृत्वा पुण्ड्राणि चांगेषु विष्णुसायुज्य माप्नुयात् ॥ इति पाद्मोत्तरखण्डे ॥ श्यामं शांतिकरं प्रोक्तं रक्त वश्यकरं तथा ॥ श्रीकरं पीतमित्याहुः श्वेत मोक्षप्रदं शुभम् ॥ आरभ्यानामिका-मूलं ललाटान्तं लिखेन्मृदम् ॥ नासिकायास्त्रयो भागा नासामूलं प्रचक्षते ॥ समारभ्य भ्रुवोर्मूलमन्तरालं प्रकल्पयेत् ॥ दशांगुलप्रमाणन्तु उत्तमो-

याये च तुलसीमालां रामां कमललोचनां ॥ प्रसन्नां पद्मवदनां वराभय चतुर्भुजां ॥ भगवत्प्रसादिकायै नमः ॥
इति मंत्रेण यथाशक्त्या पूजयेत् ॥ पूजान्ते संप्रार्थ्य धारयेत् ॥ सौभाग्यं संततिं देहि धनं धान्यं चमे सदा ॥
आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ अभिष्ट फलसिद्धिं च सदादेहि हरिप्रिये ॥ देवैस्त्वं निर्मितापूर्व
मर्चितासि मुनीश्वरैः ॥ इति मालां संप्रार्थ्य ॥ ऱ्हीं सिद्धिदायिन्यै नमः ॥ इति मंत्रेण हस्ते गृहीत्वा ॥
महा माले महामाये सर्वशक्ति स्वरूपिणी ॥ चतुर्वर्ग स्त्वयि न्यस्तस्तस्मा न्मे सिद्धिदा भव॥ऱ्हीं नमो-
भगवते वासुदेवायनमः ॥ इतिमंत्रेण कंठे धारयेत् इति माला धारण विधिः ॥ **अथ शंखघंटा पूजनं** ॥
त्तमसुच्यते ॥ नवांगुलं मध्यमं स्यादष्टांगुलमतः परं ॥ एतैरंगुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ॥ नासादिकेशपर्यंतं ऊर्ध्वपुण्ड्रं सुशोभनं ॥
मध्ये छिद्रसमायुक्तं तद्विद्याद्धरिमंदिरम् ॥ वामपार्श्वेस्थितो ब्रह्मा दक्षिणे तु सदाशिवः ॥ मध्ये विष्णुं विजानीयात् तस्मान्मध्यं न लेपयेत् ॥
अस्नातो यः क्रिया कुर्यादशुचिः पापसंयुतः ॥ गोपीचंदनसंपर्कात् पूतो भवति तत्क्षणात् ॥ अशुचिर्वाप्यनाचारो महापापं समाचरेत् ॥
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्रांकितो नरः ॥ धात्रीफलकृता माला तुलसीकाष्ठसंभवा ॥ दृश्यते यस्य देहे तु स वै भागवतो नरः ॥

---

अर्थ–हवे भगवानने पूजा करवा योग्य थवा तिलक तुलसीमाळा धारण करवा तेनो संकल्पकरी पूजन करी कहेले स्थाने धारण करवा. नाठे ए प्रकारनो माळानो विधि थयापछी भगवानने स्नान वीगेरेना कार्यमा जरुरीयात एवा जे शंख घंटा तेमनुं विधिवत पूजन करी. ते तेमनी जगापर स्थापन करवा.

स्वस्य वामभागे पुरस्तात् त्र्यस्रं त्रिकोणं मण्डलमुल्लिख्य ॥ तस्मिन्मंडले ह्रीं आधारशक्त्यै नमः ॥ इति मंत्रेण शंखाधारत्रिपादिकाः स्थापयेत् ॥ ततः ॥ ह्रीं अस्त्रायफट् इतिमंत्रेण क्षालितं ह्रीं आधार शक्त्यै नमः ॥ इत्यनेन त्रिपादिकोपरि शंखं स्थापयेत् ॥ ततः ह्रीं हृदयाय नमः ॥ इत्यनेन शंखमध्ये गंधपुष्पादि क्षिपेत् ॥ ततो दक्षिणहस्तेन शंखं स्पृष्ट्वा ॥ व्युत्क्रांतैर्मातृकाक्षरै न्यासं कुर्यात् ॥ यथा ॥ क्षं हं सं पं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अः ॥ ततः ह्रीं शिरसेस्वाहा ॥ इति मंत्रेण शंखं जलेन पूरयेत् ॥ ततो मंवन्हि-मंडलाय दशकलात्मने नमः इति मंत्रेण शंखाधार त्रिपादिकायां गंधादिना पूजयेत् ॥ ततः अंअर्कमंडलाय द्वादशकलात्मने नमः ॥ इति शंखपूजा ॥ ततः ॥ ह्रीं सोममंडलाय षोडशकलात्मने नमः ॥ इति जले पुष्पादि क्षिपेत् ॥ ततः ह्रीं गंगेच यमुनेचैव गोदावरि सरस्वति ॥ नर्मदे सिंधुकावेरि जलेस्मिन्सन्निधिं कुरु ॥ इत्यनेनाङ्कुशमु-

ये कंठलग्नतुलसीनलिनाक्षमाला ये वा ललाटपटके लसदूर्ध्व पुण्ड्राः ॥ ये बाहुमूलपरिचिन्हितशंखचक्रास्ते वैष्णवा भुवनमाशु पवित्रयंति ॥ भुजगमपि चिन्हैरंकितं यस्य विष्णोः परमपुरुषनाम्नां कीर्तनं यस्य वाचि ॥ ऋजुतरमपि पुंड्रं मस्तके यस्य कंठे सरसिजमणिमाला यस्य तस्यास्मि दासः ॥

द्या सूर्यमंडला त्तीर्थमावाह्य ॥ ततो निजहृत्पद्मात्परमात्मानं इहागच्छेत्यावाह्य ॥ ततः ह्रां शिखायै वौषडिति गालिनीमुद्रां प्रदर्शयेत ॥ ततस्तज्जलं ह्रीं नेत्राभ्यां वौषडित्यनेन वीक्षयेत ॥ ततः ही कवचाय हुं इतिअवगुंठन मुद्रयावगुंठयेत् ॥ ततः षडंगन्यासं कुर्यात् ॥ यथा ॥ क्लीं हृदयाय नमः ॥ कृष्णाय शिरसे स्वाहा ॥ गोविन्दाय शिखायै वौषट् ॥ गोपीजनाय कवचाय हुं ॥ वल्लभाय नेत्रत्रयाय वौषट् ॥ स्वाहा अस्त्रायफट् ॥ इति स्व स्व संप्रदायानुसारेण ज्ञातव्यम् ॥ ततः ऱ्हीं अस्त्राय फट् ॥ इति दिग्बंधनं कृत्वा ॥ तदनंतरं शंखे पुष्पादिदत्वा ॥ धेनुमुद्रां प्रदर्श्यकूर्चेन जलं स्पृष्ट्वाऽमृतबीजं सप्रणवं द्वादश वारान् जपेत् ॥ यथा ॥ ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्हीं ठं ऱ्ही ठं ऱ्ही ठं ॥ ततः सोममंडलाय षोडशकलात्मने नमः ॥ इति पुनर्गंधादिनार्चयेत् ॥ तत श्चक्रमुद्रया सम्यक् रक्षित्वा ॥ ततो मत्स्यमुद्रया आच्छादयेत् ॥ ततः शंखं संस्पृशन् ॥ कूर्चेन तज्जालं स्पृष्ट्वा ॥ मूलमंत्रमष्टशो जपेत् ॥ ऱ्हीं नमोनारायणाय ॥ जलगायत्री यथा ॥ ऱ्हीं जलबिंबाय विद्महे मीनपुरुषाय धीमही ॥ तन्नो विष्णुः प्रचोदयात् ॥ ततः प्रोक्षणीपात्रे किंचित क्षिपेत् ॥ शेषेण शंखजलेन सर्वपूजोपकरणानि निजशरीरं च वारत्रयं मूलमंत्रेण प्रोक्षयेत् ॥ ततो गायत्रीमंत्रं पठीत्वा शंखमुद्रां प्रदर्शयेत ॥

यथा ॥ ह्रीं पांचजन्यायविद्महे पावमानाय धीमहि ॥ त तन्नः शंखः प्रचोदयात् ॥ इति गायत्री ॥ शंखस्थदेवतायै नमः ॥ इतिमंत्रेण शुद्धोदकैः संस्नाप्य पूजयेत ॥ शंखस्थदेवतायै नमः ॥ गंधं स० ॥ पुष्पं० धूपं० दीपं नैवेद्यं समर्पयामि ॥ पुष्पं गृहीत्वा प्रार्थयेत ॥ शंखादौ चंद्रदैवत्वं कुक्षौ वरुणदेवता ॥ पृष्ठे प्रजापतिश्चैव अग्रे गंगा सरस्वती ॥ त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ॥ शंखे तिष्ठन्ति विप्रेन्द्र तस्माच्छंखं प्रपूजेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ निर्मितः सर्वदेवैश्च पांचजन्य नमोस्तु ते ॥ शंखस्थदेवताभ्यो नमः ॥ प्रार्थनापूर्वकं नमस्कारं स० ॥ अनया पूजया शंखस्थदेवताः प्रीयंतां नमम ॥ **अथ घंटा पूजनं** ॥ घंटास्थित-गरुडाय नमः॥आवाहयामि॥यथावकाशेन यथाशक्त्या पूजयेत्॥पूजान्ते हस्ते धृत्वा नादं कुर्यात ॥सामध्वनिशरीर-स्त्वं वाहनं परमेष्ठिनः॥ विषपापहरोनित्यमतः शांतिं प्रयच्छमे ॥ आगमार्थन्तुदेवानां गमनार्थंतु राक्षसाम् ॥ घण्टानादं प्रकुर्वीत तस्माद्घण्टां प्रपूजयेत्॥ इति मंत्रेण प्रार्थयेत् ॥ अनेन पूजनेन घण्टास्थितगरुडः प्रीयतां ॥ इति शंखघण्टा-पूजनं ॥ **अथ न्यासः** ॥ यजमानः स्वशरीरे न्यासान् कुर्यात् ॥ केशवायनमः वामकरे ॥ नारायणायनमः दक्षिणकरे ॥ माधवायनमः वामपादे ॥ गोविंदायनमः दक्षिणपादे ॥ विष्णवेनमः वामजानुनि ॥

॥ त्रिविक्रमायनमः वामकट्यां ॥ वामनायनमः दक्षिण कट्यां ॥
मधुसूदनायनमः दक्षिण जानुनि ॥ त्रिविक्रमायनमः वामकट्यां ॥ वामनायनमः दक्षिण कट्यां ॥ श्रीधरायनमः नाभौ ॥ ऋषीकेशायनमः हृदये ॥ पद्मनाभायनमः कंठे ॥ दामोदरायनमः वामबाहुमूले ॥ संकर्षणायनमः दक्षिणबाहुमूले ॥ वासुदेवायनमः मुखे ॥ प्रद्युम्नायनमः नेत्रयोः ॥ अनिरुद्धायनमः नासिकायां ॥ उरगायनमः ललाटे ॥ सर्वकामदायनमः शिखायां ॥ सहस्रशीर्षायनमः सर्वांगे ॥ **अथ पंचाङ्गन्यासः** ॥ दामोदरायनमः हृदि ॥ अधोक्षजायनमः शिरसि ॥ नृसिंहायनमः शिखायाम् ॥ अच्युतायनमः कवचे ॥ जनार्दनायनमः अस्त्रायफट् ॥ इति पंचांगन्यासः ॥ **अथ महापातकहरन्यासः** ॥ लक्ष्मीनारायणाभ्यांनमः पादयोः ॥ विशालाक्षिकेशवाभ्यांनमः जान्वोः ॥ सुनंदासंकर्षणाभ्यांनमः उर्वोः ॥ रुक्मिणीमाधवाभ्यांनमः कट्योः ॥ वैष्णव्यच्युताभ्यांनमः नाभौ ॥ नारायणीगोविंदाभ्यांनमः हृदि ॥ मित्रविंदाहृषीकेशाभ्यांनमः कंठे ॥ पद्माक्षित्रिविक्रमाभ्यांनमः हस्तयोः ॥ नारसिंहिनृसिंहाभ्यांनमः बाह्वोः ॥ सत्यावासुदेवाभ्यांनमः मुखे ॥ कालिंदीजनार्दनाभ्यांनमः नासिकयोः ॥ कमलावामनाभ्यांनमः अक्ष्णोः ॥ सत्याश्रीकृष्णाभ्यांनमः ललाटे ॥ जांबुवतीश्रीधराभ्यांनमः मूर्ध्नि ॥ लक्ष्मणोऽधोक्षजाभ्यांनमः शिखायां ॥ वाराहीपद्म-

नाभाभ्यां नमः सर्वांगे ॥ **अथ अंगांगन्यासः** ॥ जिष्णवेनमः शिरसि ॥ १ ॥ विष्णवेनमः वामनेत्रे ॥ २ ॥ हरयेनमः दक्षिणनेत्रे ॥ ३ ॥ कृष्णायनमः वामश्रोत्रे ॥ ४ ॥ अधोक्षजायनमः दक्षिणश्रोत्रे ॥ ५ ॥ महाविष्णवेनमः वामबाहुमूले ॥ ६ ॥ केशवायनमः वामकूर्परे ॥ ७ ॥ माधवायनमः वाममणिबंधे ॥ ८ ॥ रामायनमः वामांगुलिमूले ॥ ९ ॥ अच्युतायनमः वामांगुल्यग्रे ॥ १० ॥ पुरुषोत्तमायनमः दक्षिणबाहुमूले ॥ ११ ॥ गोविंदायनमः दक्षिणबाहुकूर्परे ॥ १२ ॥ वामनायनमः दक्षिणबाहुमणिबंधे ॥ १३ ॥ श्रीशायनमः दक्षिणबाह्वंगुलीमूले ॥ १४ ॥ श्रीकण्ठायनमः दक्षिणबाह्वंगुल्याग्रे ॥ १५ ॥ विश्वसाक्षिणेनमः हृदि ॥ १६ ॥ नारायणाय नमः वामपादमूले ॥ १७ ॥ मधुरिपवे नमः वामजानुनि ॥ १८ ॥ अनिरुद्धायनमः वामपादांगुलिमूले ॥ १९ ॥ त्रिविक्रमायनमः वामपादांगुल्यग्रे ॥ २० ॥ वासुदेवायनमः दक्षिणपादमूले ॥ २१ ॥ जगद्योनयेनमः दक्षिणजानुनि ॥ २२ ॥ शेषतल्पगतायनमः दक्षिणपादांगुलिमूले ॥ २३ ॥ संकर्षणायनमः दक्षिणपादांगुल्यग्रे ॥ २४ ॥ **अथैकादशन्यासः** ॥ प्रद्युम्नायनमः शिखायां ॥ १ ॥ दैत्यारये नमः मुखवृत्ते ॥ २ ॥ विश्वतोमुखायनमः ककुदि ॥ ३ ॥ जनार्दनायनमः चिबुके ॥ ४ ॥ धराधरायनमः हृदयादिवामांसे ॥ ५ ॥ श्रीधरायनमः हृदया-

दिदक्षिणांशे ॥ ६ ॥ पूतनाप्राणहर्त्रेनमः नाभौ ॥ ७॥ यशोदास्तनन्धयायनमः गुह्ये ॥ ८ ॥ मारिचघातिने नमः
गुदे ॥ ८ ॥ हस्तप्रक्षालनम् ॥ ९ ॥ बकारयेनमः कट्यादिवामपादातम् ॥ वृत्रारिप्रियायनमः कट्यादिदक्षिणपा-
दांतं ॥११ ॥ इतिएकादशन्यासः ॥ **अथ करन्यासः** ॥ अंगुष्ठयोः वासुदेवायनमः ॥ तर्जन्योः अनिरुद्धायनमः
मध्यमयोः ॥ संकर्षणायनमः ॥ अनामिकयोः ॥ प्रद्युम्नायनमः कनिष्ठिकयोः हृषीकेशायनमः ॥ करतलकरपृष्ठयोः
पुरुषोत्तमायनमः॥ इतिदेहन्यासः॥ **अथ देवन्यासः**॥ देवान्स्पृष्ट्वा हस्तेतुलसिदलंगृहित्वा केशवायनमः देव-
स्यवामकरे ॥ नारायनमः देवस्यदक्षिणकरे ॥ माधवायनमः देवस्यवामपादे ॥ गोविंदायनमः देवस्यदक्षिणपादे ॥
विष्णवेनमः देवस्यवामजानुनि ॥ मधुसूदनायनमः देवस्यदक्षिणजानुनि ॥ त्रिविक्रमायनमः देवस्यवामकट्यां ॥
वामनायनमः देवस्य दक्षिणकट्यां ॥ श्रीधरायनमः देवस्यनाभौ ॥ हृषीकेशायनमः देवस्यहृदये ॥ पद्म
नाभायनमः देवस्यकंठे ॥ दामोदरायनमः देवस्यवामबाहुमूले ॥ संकर्षणायनमः देवस्यदक्षिणबाहु-

---

अर्थ—एवीरीते तिलक तुलसी माला शंख घंटा विगेरेनु पूजन स्थापन थयापछि पोताना शरीरनी शुद्धि थवाने उपर लखेला न्यासो करवा. एटले मंत्राते यजमाने पोताना शरीरे कहेले ठेकाणे हाथ अरकाडवो, तथा पोताना शरीरना न्यासो थया पछी, हाथमा तुळशी अथवा पुष्प लइ भगवानने अरकाडी तेमने शरीरे, ते ते स्थानना देवताओनु प्राकट्य थवा तेमनान्यासो करवा.

मूले ॥ वासुदेवायनमः देवस्यमुखे ॥ प्रद्युम्नायनमः देवस्यनेत्रयोः अनिरुद्धायनमः देवस्यनासिकायां ॥ उरगायनमः देवस्यललाटे ॥ सर्वकामदायनमः देवस्याशिखायां ॥ सहस्रशीर्षायनमः देवस्यसर्वांगे पाद्यं ॥ कान्तेन्दुकान्तमणिमंडितकंठनालं श्रीकांतकाचनकमंडलुकर्णपूरं ॥ दूर्वादलोत्पलसुगंधिमथामलं सपादोदकं मुररिपोः पदयोर्गृहाण ॥ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं ॥ तोयमेतत सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥ श्रीराधिकासहितपुरुषोत्तमायनमः पादयोः पाद्यं स० ॥ अर्घ्यं ॥ सिद्धार्थगंधकुसुमाक्षत-पूगदूर्वातोयैरलं तिलयवैरभिपूज्यपात्रम् ॥ आधारमूर्धनि समर्पितमुक्तमंत्रैरर्घ्यं गृहाण जगदीश दयार्द्रदष्टे ॥ नंदगोपगृहे जाता गोपिकानंदहेतवे ॥ गृहाणार्घ्यं मया दत्तं राधया सहितो हरेः॥ श्रीराधिकासहितपुरुषोत्तमा-यनमः हस्तयोः अर्घ्यं स० ॥ आचमनीयं ॥ कंकोलकुङ्मलदलाकुशलेलविंगा जातीफलामलसुगंधि-युतं मुरारे ॥ मंत्रेण मंत्रितमिदं कलधौतद्रव्यामाचम्यतामुचितमाचमनीयमम्भः ॥ गंगाजलसमानीतं सुवर्णकलशे स्थितम् आचम्यतां हृषीकेश पुराण पुरुषोत्तम ॥ श्रीराधिकासहितपुरुषोत्तमायनमः ॥ आ-चमनीयं स० ॥ मधुपर्कः ॥ मिश्रंदधी घृतमधू स्थितकांस्यपात्रे पूर्णे सुगंधिसलिलैरभिमंत्रपूर्वं ॥ हस्तं स्वह-

स्तकमलांजलिना मया ते दत्तं गृहाण मधुपर्कमिमं मुरारे॥दधि क्षौद्रं घृतं शुद्धं कपिलायाः सुगंधि यत॥सुस्वादु मधुरं सौरे मधुपर्कं गृहाण मे ॥ श्रीराधिकासहित–पुरुषोत्तमायनमः ॥ मधुपर्कं स० ॥ पंचामृतं एकीकृत्य स्नापयेत ॥ आनंदवद्धन निरंजन देवदेव श्रीविश्वनाथ करुणाकर दीनबन्धो ॥ भक्त्या मयार्पितमनेकगुणाधिवास पंचामृतस्नापनमेतदुरीकुरुष्व ॥ पयो दधि घृतं गव्यं माक्षिकं शर्करा तथा ॥ गृहाणेमानि द्रव्याणि राधिकानंददायक ॥ श्रीराधिकासहितपुरुषोत्तमायनमः ॥ पंचामृतस्नानं स० ॥ पृथक् पंचामृतादौ पयःस्नानम् ॥ दिव्यौषधीद्रवभवं नवनीतपूर्णं दिव्यामृताधिकरसं परिकामदं च ॥ स्वर्धेनुजं जगदभिष्टमनाधिरूपं स्नानाय शुद्धमुरीकुरु देव दुग्धं ॥ कामधेनुसमुद्भूतं देवर्षिपितृतृप्तिदम् ॥ पयोददामि देवेश स्नानार्थं प्रतिगृह्यताम्॥ श्रीराधिकासहित–पुरुषोत्तमायनमः॥पयः स्नानं स०॥पयःस्नानान्ते वरुणस्नानं० वरुणस्नान्ते आचमनीयं० सकलपूजार्थं अक्षतान्स० ॥ दधिस्नानं ॥ कर्पूर कुंद कुमदेन्दु करावदान्तं मल्ली प्रफुल्ल कुसुमाकर कांतिकारं ॥ स्नानाय शुद्ध रसराज यथामलार्चिस्निग्धं गृहाण दधिदीन जनैकबन्धो ॥

एप्रमाणे न्यासो भया पछी पाद्यपात्रलइ भगवानने पाद्योपचार करवो, तेमज अर्घ्यं आचमनीय मधुपर्क एकत्रपंचामृत तथा पृथक पंचामृत स्नान करावबु. तेमा दुध चडावबु पछी पाणी चडावबु. तथा बीजा बधाउपचारो मंत्रपुष्पाजली लगी करवा. पछी दहीं चडाववुं तेना पण प्रथम प्रमाणे बधा उपचारो करवा,

पयसस्तु समुद्भूतम् हिमाद्रि द्रव्य योगतः ॥ दध्यानीतं मयादेव स्नानार्थं प्रतिगृह्यताम् श्री राधिकासहित पुरुषोत्तमायनमः ॥ दधिस्नानं स० ॥ दधिस्नानान्ते वरुणस्नानं० वरुणस्नानान्ते आचमनीयं० सकलपूजार्थे अक्षतान् स० ॥ घृतस्नानं ॥ तेजोमयेन तपनद्युतिपावितेन गव्येन सर्वविधिना परमंत्रितेन ॥ वन्हौ श्रुतेन स्वयामि रसाघृतेन भौमास्तृतेन विधिना च घृतेन स्नानं ॥ नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ यज्ञांग देवताहेतो घृतस्नानार्थ मर्पितम् ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ घृतस्नानं स० ॥ घृतस्नानान्ते वरुणस्नानं स० वरुणस्नानान्ते आचमनीयं स० सकलपूजार्थे. अक्षतान् स० ॥ मधुस्नानं॥ नानाविधौषधि लता रससंभृतान्त माधुर्य मिष्टममृतं प्रतिमुञ्चदिव्यं ॥ माणिक्यपात्र समप्लुरित भक्तिपूर्व मंगीकुरुष्व मधुदेव महावरिष्ठं ॥ पुष्पसार समुद्भूतं · माक्षिकैरानितं चयंत् ॥ सर्वतुष्टिकरं देव मधुस्ना नार्थ मर्पितम् ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ मधुस्नानं स० मधुस्नानान्ते वरुणस्नानं स० वरुणस्ना नान्ते आचमनीयं स० सकलपूजार्थे अक्षतान् स० ॥ शर्करास्नानं ॥ पूर्णेन्दुसागर समुद्भवयासिनिम्ना मुक्ताफल·

---

एवी रीते दरेकवखते दरेक उपचारो करवा जोइये. पण तेनो आवकाश न मळवाथी केवळ दुध चडावी बे वखत पाणी तथा एक वखत आचमनीनुं जळ तथा सघळा उपचारने लीधे चंदन, पुष्प, चडावी नमस्कार करवा, एम रुढी छे. ए प्रमाणे, दुध, दहीं, घीइ. मध, खाड शुद्धजळथी स्नान करावी पंचोपचारथी

द्व सुधा धिकयामहिम्ना ॥ सर्वांगशोधनविधौ वरया मुरारे सुस्नाहि सिद्ध वरशर्करया जविष्णो ॥ इक्षुरस समुद्भूता शर्करा सुमनोहरा ॥ मलापहारिकादिव्या स्नानार्थं प्रतिगृह्यताम् ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ शर्करास्नानं स० ॥ शर्करास्नानान्ते वरुणस्नानं स० वरुणस्नानान्ते आचमनीयं० ॥ सकलपूजार्थे अक्षतान्स० अभ्यंगस्नानं० सुगंधतैलं तिलजं मनोहरं सुवासितं चंपक जाति पंकजैः ॥ अन्यैश्च कालोद्भवपुष्पसंयुतं लक्ष्मीपते ह्यंगविलेपनार्थं ॥ चंपकाशोक वकुला मालती मोगरादिभिः ॥ वासितं स्निग्धताहेतो स्तैलं च प्रतिगृह्यताम् ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ अभ्यंगस्नानं स० आचमनीयं स० ॥ शुद्धोदक स्नानं॥ दिव्यद्रुमेन्धन समिद्धहुताशनस्थैः शुद्धोदकैः सुविमलैश्च समुद्धृतैश्चः ॥ गोविन्दनाथ निधिनाथ यथासुखेन स्नानं विधेहि विधिना विधिवत् प्रदिष्टं ॥ गंगाजल समं शीतं नदीतीर्थ सुसंभवं ॥ स्नानं दत्तं मयाकृष्ण गृह्यतां नंदनंदन ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ शुद्धोदक स्नानं स० ॥ शुद्धोदकस्नानान्ते आचमनीयं० ॥ देवं पात्रा-

पूजन करवुं पंचोपचार पूजन थया पछी- भगवानना परथी पुष्पलइ माथेमुकी नाके सुंधी डाबा हाथतरफ यजमाने फेकवुं, पछी सारा पात्रमां पाणीभरी तेमां चंदन, पुष्प, वीगेरे नाखी, शंखवती पाणीनी धारा भगवानना उपर करवी तथा घंटा वगाडवो तथा पुरुष सूक्तनो पाठ ११ वखत अथवा अभिषेकना मंत्रो भणवा.

न्तरे कृत्वा पंचोपचारैः पूजयेत ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः गंधं स० ॥ श्रीराधिकासहित पुरुषोत्त-माय नमः ॥ पुष्पं स० श्रीराधिकासहितपुरुषोत्तमाय नमः ॥ धूपं स० ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः दीपं स० ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ नैवेद्यं स० ॥ अनेन पंचोपचारपूजनेन श्रीराधिकासहित पुरुषोत्तमः प्रीयतां ॥ उत्तरे निर्माल्यं विसृज्य ॥ पुनः पूजयेत् ॥ **अभिषेकं कुर्यात्** ॥ अभिषेकार्थं पात्रे जल गंध पुष्प दुग्धादीनि क्षिपेत् तेन देवस्योपरि अविच्छिन्नांधारां पातयेत् ॥ ब्राह्मणाः अभिषेकमंत्राः पठेयुः ॥ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेस्तुहृषीकेश महापुरुष पूर्वज ॥ १ ॥ नमो हिरण्यगर्भाय प्रधानाव्यक्त रूपिणे ॥ ह्रीं ( नमो ) भगवते वासुदेवाय शुद्धज्ञान विभाविने ॥ २ ॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ ३ ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारक

क्षीरस्नानेन सौभाग्यं दध्ना मिष्टान्नभोजनम् ॥ घृतेन स्नापयेद्यो मां नरो मम पुरं व्रजेत् ॥ स्नानं शर्करया यस्तु कारयेद्यो ममोपरि ॥ स राजा जायते लोके पुनस्वर्गादिहागतः ॥ शाम्भू शंख करे धृत्वा मंत्रै रेतैस्तु वैष्णवैः ॥ इति हरिभक्तिविलासे स्कान्देच ॥ यस्तु वादयते घण्टा वैनतेयविचिन्हिताम् ॥ धूपे नीराजने स्नाने पूजाकाले विलेपने ॥ गृहे यस्मिन्भवेन्नित्यं घण्टानागारिसंयुता ॥ सर्पाणां न भयं तत्र नाग्निविद्युत्समुद्भवम् ॥ इति विष्णुयामले डामरतंत्रोक्तेश्च ॥

... घोरमनन्त क्लेशभाजनम् ॥ त्वामेव शर

स्तथा॥ अध्यक्षश्चानुमन्ता च गुणमाया समावृतः ॥४॥ संसार सागरं घोरमनन्त क्लेशभाजनम् ॥ त्वामेव शर
णं प्राप्य निस्तरन्ति मनीषिणः ॥ ५॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्ता
नां त्वं प्रकाशसे ॥ ६ ॥ नैवकिञ्चित्परोक्षंते प्रत्यक्षोऽपि न कस्यचित ॥ नैवकिंचिदसिद्धंते नचसिद्धोऽसि कस्य
चित ॥ ७ ॥ कार्याणां कारणं पूर्व वचसां वाच्यमुत्तमम् ॥ योगानां परमां सिद्धि परमं ते पदं विदुः ॥ ८ ॥
अहं भीतोऽस्मि देवेश संसारेस्मिन्भयावहे ॥ पाहि मां पुण्डरीकाक्ष नजाने शरणं परं ॥ ९ ॥ कालेष्वपि च
सर्वेषु सर्वावस्थासु चाच्युत ॥ शरीरेपि गतोचापि वर्तते मे महद्भयम् ॥ १० ॥ त्वत्पाद कमलादन्यन्न मे जन्मा
न्तरेष्वपि ॥ निमित्तं कुशलस्यास्ति येनगच्छामि सद्गतिं ॥ ११ ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञान मार्जितम् ॥
जन्मान्तरेपि मेदेव माभूत्तस्य परिक्षयः ॥ १२ ॥ दुर्गतावपिजातायां त्वद्गतो ये मनोरथः ॥ यदिनाशं न
विंदेत तावतास्मिकृतीसदा ॥ १३ ॥ नकाम कलुषं चित्तं मम ते पादयोः स्थितम् ॥ कामयेद्वैष्णवत्वन्तु सर्व जन्म
सु केवलम् ॥१४॥ सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ॥ किंकरोऽस्मि हृषिकेश भूयो भूयोस्मि किङ्करः ॥१५॥
इत्येवं मुनयःस्तुत्या स्तुत्वा देवं दिने दिने ॥ किंकरोऽस्मीति चात्मानं देवायैव न्यवेदयन् ॥ १६ ॥ पुरुषस्य हरेः
सूक्तं स्वर्ग्यं धन्यं यशस्करं ॥ आत्मज्ञानमिदं पुण्यं योगध्यानमिदं परम् ॥ फलाहारो जपेन्नित्यं पश्यन्नात्मानमा

त्मनि ॥ फलान्य भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत ॥ अरण्ये निवसेन्नित्यं जपन्निममृपि र्मुनिः ॥ रुग्भिस्त्रिप वर्णकाले स्नायादप्सु समाहितः ॥ इति महार्णवोक्त पुरुषसूक्तम् ॥ ध्येयः सदासवितृमण्डलमध्यवर्ती नारायणः सरसिजासन सन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटि हारी हिरण्म यवपुर्धृतशंखचक्रः ॥ एतत्तुयः पठति केवलमेवसूक्तं नारायणस्य चरणावभिवंद्य वंद्यौ ॥ पाठेन तेन परमेण सनातनस्य स्थानं जरामरण वर्जितमेत विष्णोः ॥ हविषाग्नौ जले पुष्पे ध्यानेन हृदये हरिम् ॥ यजन्तिसुरयोनित्यं जपेच्च रविमण्डले ॥ बिल्वपत्रं शमीपत्रं पत्रंभृंगारकस्य च॥मालती कुशपद्मं च सद्यस्तुष्टिं करं हरेः ॥ यन्नोपपद्यते किंचित् त्वंध्याये मनसैवतु॥संपद्यते प्रसादात्तु देवदेवस्य चक्रिणः ॥ पत्रैश्च पुष्पैश्च फलैश्च तोयै रक्रीतलभ्यैश्च सदैव सत्सु ॥ भक्त्यैकलभ्यै पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते नयत्नः ॥ इत्येवमुक्तः पुरुषस्य विष्णो रर्चाविधिर्विष्णुकुमार नाम्ना ॥ मुक्त्यैक मार्ग प्रतिबोधनाय दृष्टाविधानं त्विहनारदोक्तं ॥ नमोस्त्वनंताय सहस्र मूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ अभिषेकानंतरं **शुद्धोदक स्नानं** ॥ गंगासिंधु सरस्वती च यमुना गोदावरी नर्मदा कावेरी सरयू महेन्द्रतनया चर्मण्डवती वेदिका ॥ क्षिप्रा वेत्रवती महासुरनदी ख्यातागयागंडकी पूर्णा पूर्णजले समुद्रसहिता कुर्यात्सदा मंगलम् ॥ नानातिर्थादाहृतं च तोय मुष्णं मया

समकृतं ॥ स्नानार्थं च प्रयच्छामि स्वीकुरुष्व दयानीधे ॥ श्रीराधिकासहित पुरुषोत्तमायनमः शुद्धोदक स्नानं समर्पयामि ॥ वस्त्रं ॥ सौवर्णतन्तु रचितानि विचित्रतानि सूक्ष्माणि देव तपन द्युति सन्निभानि ॥ दिव्यानि नाथ विधिनाथ मयार्पितानि नानांबराणि परिधेहि सुखं विधेहि ॥ तप्तकांचन वरणाभं पट्टोरणं मृदुलं शुभं ॥ युग्मवस्त्रं गृहाणेदं परिधारय माधव ॥ श्रीराधिका सहित पुरुषोत्तमायनमः ॥ वस्त्रं स० ॥ यज्ञोपवीतं ॥ ॐ कारतत्वमयतन्तु परीतमीशं ब्रह्मात्मभिः त्रिगुणितं विहितं सवित्र्या ॥ यज्ञोपवीत मभिमंत्रित मात्मशक्त्या देवाधिदेव विधिवत् कुरुनाथ कंठे ॥ दामोदर नमस्तेस्तु त्राहिमां भव सागरात्॥ ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम ॥ श्रीराधिका सहित पुरुषोत्तमाय नमः ॥ यज्ञोपवीतं स० ॥ यज्ञोपवीतान्ते अचमनं ॥ अलंकारः ॥ माणिक्य मौक्तिक सुविद्रुम पुष्पराग हीरेन्द्र नील मणिमेदक केतु रत्नैः ॥ नानाप्रकार सुशुभा भरणानि देव भक्त्या समर्पित तवो परि प्रेमयुक्तं ॥ मुकुटं स्वर्ण घटितं जडितं नव रत्नकैः ॥ पिच्छ गुच्छ समायुक्तं गृहाण पुरुषोत्तम ॥ श्रीराधिका सहित पुरुषोत्तमाय नमः अलंकारान् स० ॥ कुंकुमं

अर्थ—अभीषेकना उपरना मंत्रोथी अभीषेक करी बाकीना उपचारो भगवानने करी शुद्ध जळथी स्नान करावी वस्त्रथी लुछी वस्त्र पेहेरावी तेमना स्थानके बेसाडवा, तथा यथा शक्ती, जे घरेणा मळे, ते, पेहेराववा, ते कांइ न होय तो गुजानी माळा तथा तुळशीनोमाळा पेहेराववी, तथा जनोइ पेरावबुं.

चंदनं च ॥ सामोद मोदनवना निलशुभ्रगंध कर्पूर कुंकुम कुरंगम ताम्बराढ्यं ॥ पुष्पोत्करार्चित समुल्लसितं हि विष्णो गंधं गृहाण सकलेषु सुगन्ध बन्धो ॥ श्रीखण्डं चंदनं दिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चंदनं प्रति गृह्यताम् ॥ श्रीराधिका सहित पुरुषोत्तमाय नमः गन्धं स० ॥ अक्षतान् ॥ रक्ताक्षता गंध विमिश्रिताश्च ललाट पट्टे तिलको परिश्च ॥ गृहाण देवेश जगन्निवास लक्ष्मीपते स्वीकुरु भालभागे ॥ अक्षताश्च सुरश्रेष्ठाः कुंकुमाक्ता सुशोभिताः ॥ मयानिवेदिता भक्त्या गृहाण पुरुषोत्तम ॥ श्रीराधिका सहित पुरुषोत्तमाय नमः अक्षतान् स० ॥ पुष्पं ॥ मंदार कल्पतरुजाति समुद्भवैश्च मल्लीजपा बकुल चंपक पारिजातैः ॥ लक्ष्मीपते गोकुलनाथ भक्त्या तुलसीदले विरचयामि तवाङ्गशोभां ॥ माल्यादिनि सुगन्धीनि मालत्यादिनीवै प्रभो ॥ मयाहृतानि पूजार्थं पुष्पाणि प्रति गृह्यताम् ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ पुष्पाणि स० ॥

॥ **अथाङ्गपूजा** ॥ हस्ते गन्धपात्रं गृहीत्वा ॥ दक्षिणेन मर्चयत् ॥ नंदात्मजायनमः पादौ पूजयामि० ॥ यशोदास्तनंधयायनमः गुल्फौ पू० केशिसूदनायनमः जानुनी पू० भूभारोत्तारकायनमः जंघे पू० अनन्तायनमः कटिं पू० विष्णुरूप धृपेनमः मेढ्रं पू० प्रद्युम्नायनमः नाभिं पू० अनिरुद्धायनमः हृदयं पू० श्रीकण्ठायनमः कण्ठं

कुंकुमागरुश्रीखण्डकर्दमैर्ममाविगृहं ॥ आलिपेद्वै सहोमासे कल्पकोटि वसे दिवि ॥ १ ॥

पू० सकलासधृते० बाहु पू० पाचसपतयेनमः मुखं पू० केशवायनमः नेत्रे पू० सर्वात्मनेनमः शिरः पू० विश्वरु
पिणेनमः सर्वाङ्गं पू० ॥ इत्यङ्गपूजा ॥ हस्ते पुष्पाक्षतान् गृहीत्वा ॥ **अथ वरणपूजा०** ॥ पूर्वे
हृदयायनमः ॥ दक्षिणे शिरसेनमः ॥ पश्चिमे खिखायैनमः ॥ उतरे कवचायनमः ॥ पूर्वे शंखा-
यनमः ॥ दक्षिणे चक्रायनमः ॥ पश्चिमे गदायैनमः ॥ उत्तरे पद्मायनमः ॥ अंजलौ
पुष्पाण्यादाय ॥ अभिष्ट सिद्धि मेदेहि शरणागत वत्सल ॥ भक्त्या समर्पये तुभ्यं गृहाण
परमेश्वर ॥ प्रथमावरणार्चन देवेभ्योनमः सर्वोपचारार्थे गन्धं पुष्पं स० पूर्वदलात्मादक्षिण्येन ॥ पुनःअक्षतान्
गृहीत्वा ॥ रुक्मिण्यैनमः ॥ सत्यभामायैनमः ॥ नाभिकायैनमः ॥ कालिंद्यैनमः ॥ मित्रवृन्दायैनमः ॥ लक्ष्मणायै
नमः ॥ जाम्बूवत्यैनमः ॥ सुशिलिकायैनमः ॥ अंजलौ पुष्पाण्यादाय ॥ अभिष्टसि० द्वितियावरणार्चनदेवेभ्यो
नमः सर्वोपचारार्थे गन्धं स० ॥ दलाग्रे ॥ पुनः अक्षतान् गृहीत्वा ॥ वासुदेवाय नमः ॥ देवक्यै नमः ॥ नंद-
गोपतयेनमः ॥ यशोदायैनमः ॥ वलभद्राय नमः ॥ सुभद्रायैनमः ॥ गोपेभ्यो नमः ॥ गोपिकाभ्योनमः
अंजलौ पुष्पाण्यादाय ॥ अभिष्टसिद्धि० ॥ तृतीयावरणार्चनदेवेभ्योनमः सर्वोपचारार्थे गन्धं पुष्पं स० ॥ पूर्वे

ए प्रमाणे भगवान् पोताने स्थाने. बीराजेला जोइने सकळे अंगे चंदन करी कपाळे तिलक कुंकुमनो करी तेनापर लाल चोखा चोडी पुष्प चडाववा.

इन्द्रायनमः ॥ आग्नेयां अग्नयेनमः ॥ दक्षिणे यमायनमः ॥ निरुत्यां निऋतयेनमः ॥ पश्चिमे वरुणाय नमः ॥ वायव्यां वायवेनमः ॥ उत्तरे सोमायनमः ॥ ईशान्यां ईशानायनमः ॥ ऊर्ध्वं ब्रह्मणेनमः ॥ अधः अनंतायनमः ॥ अंजलौ पुष्पाण्यादाय अभिष्टसि० ॥ चतुर्थावरणार्चनेनेदेवेभ्यो नमः सर्वोपचारार्थे गंधंपुष्पंस० विश्वायनमः ॥ विष्णवेनमः ॥ महाविष्णवेनमः ॥ गोविंदायनमः ॥ वामनायनमः ॥ श्रीशायनमः ॥ श्रीकण्ठायनमः ॥ विश्वसाक्षिणेनमः ॥ नारायणायनमः ॥ मधुरिपवेनमः ॥ अनिरुद्धायनमः ॥ त्रिविक्रमाय नमः ॥ जगद्योनयेनमः ॥ शेषतल्पगायनमः ॥ संकर्पणायनमः ॥ प्रद्युम्नायनमः ॥ दैत्यारयेनमः ॥ विश्वतो-

मणिकांचनपुष्पाणि तथा मुक्तामयानि च ॥ तुलसीपत्रदानस्य कलांनार्हन्ति पोडशीम् ॥ १ ॥ तुळसीमंजरीभिर्यः कुर्याद्वै मम पूजनं ॥ सगर्भस्यगृहान्यायान्मुक्तिभावि भवेश्वरः ॥ २ ॥

---

अर्थ—पछी भगवानना आखा अंगनी पूजा करवा [illegible] हाथमां चंदननो वाडको लइ ब्राम्हण कहे ते,ते,स्थानपर चंदन चडाववुं, ते, थया पछी चोखा लइ भगवानना जोडे आवेला देवताओ. तेमनुं पूजन करवुं, तेमां एक परिवार थयोके तेने चंदनपुष्पलइ मंत्रभणी चडावी फरीथी बीजाने चोखाचडाववा, एने आवरण पूजा कहेछे, ते थयापछी भगवाननी चोवीसनामथी पूजाकरवी तथा तुळशी (१०००) लावेला होय तेने सारापात्रमां मुकी तेनाउपर पाणीछांटी पंचोपचारथी पूजाकरी संकल्प करी भगवानने चडववी ते प्रमाणे तुळशी चडाव्यापछी पुष्पनी माळा तथा जटाबंधानी अबील गलाल सींधूर चडाववुं.

मुखायनमः ॥ जनार्दनायनमः ॥ धराधरायनमः ॥ श्रीधरायनमः ॥ अभिष्ट सि० ॥ अंजलौपुष्पाण्यादाय पंचमावरणार्चनदेवेभ्योनमः ॥ सर्वोपचारार्थे गन्धं पुष्पं स० ॥ पूर्वे वज्रायनमः ॥ शक्तयेनमः ॥ दण्डायनमः ॥ खड्गायनमः ॥ पाशायनमः ॥ अंकुशायनमः ॥ गदायैनमः ॥ त्रिशूलायनमः ॥ चक्रायनमः ॥ पद्मायनमः ॥ अभिष्ट सि० अंजलौ पुष्पाण्यादाय ॥ षष्ठाऽवरणार्चन देवेभ्यो नमः ॥ सर्वोपचारार्थे गंधं पुष्पं स० ॥ केशवादि चतुर्विंशति नामभिः पूजयेत् ॥ ततो यथावकाशं सहस्रनामभिः तुलशीदलैः पूजयेत् ॥ सौभाग्य द्रव्याणि ॥ अबिलगुलालं भवश्वेतरक्तं वर्णविभासं वसनाय शोभम् ॥ ऋतौ वसन्ते प्रियदेवतुभ्यं गृहाणपूजां हरिलक्ष्मिदिव्यं॥ अबिरं आयुषोवृद्धि सर्व साभाग्य दायकं ॥ अबिरेनार्चितो देव प्रीयतां परमेश्वर ॥ श्रीराधिका-सहित पुरुषोत्तमाय नमः ॥ श्वेतचूर्णं स० ॥ रक्तचूर्णं ॥ गुलालं रक्तवर्णाभं सर्वसंतोष कारकम् ॥ गुलालेनार्चितोदेव प्रीयतां परमेश्वर ॥ श्रीराधिकासहितपुरुषोत्तमायः नमः रक्तचूर्णं स० ॥ सिन्दूरं कल्पितं दिव्यं

धूपं दशांगं यदि चेत् करोति मासे सहे मे अतिवल्लभे च ॥ ददामि कामानतिदुर्लभानपि बलं च पुष्टिं सुतदारभक्तिम् ॥ १ ॥ .

---

५—कुष्ट— गोल—३ लाख—५—नखला—१ हरडे—१ जटामासि—३ शिलाजित—४ कर्पूर—१ राय—१ गुग्गुल—ए दस चीजो अंक प्रमाणे भागलइ एकठो करीने धूप करवो. एने दशाग धूप कहे छे व्रतराजे ॥

सिन्दूरं नागसंभवम् ॥ सिन्दूरेणार्चितोदेव प्रीयतां परमेश्वर ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ सिन्दूरं स० ॥ धूपं ॥ घृतेनयुक्तं परमं रमेश सुगन्धितं चंदन दारुकाद्यैः ॥ गृहाणदामोदर विश्वकाय धूपं मनोहारि दशांग-युक्तं ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः धूपं स० ॥ दीपं ॥ घृतोक्तवर्तैत्रयनिर्मितं शुभं चंद्रज्वलं कांचन पात्रदीपितं ॥ बाह्यंतराज्ञानतमौघहारकं लक्ष्मीपते दीपमभिप्सितं कुरु ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ दीपं स० ॥ नैवेद्यं ॥ आज्येनयुक्तं रसषट्युतं च लेह्यं च पेयं मधुरं मनोज्ञं ॥ ग्रहाण नैवेद्य जनार्दनाच्युत श्रिया-सह स्थावरस्थाणवे नमः ॥ श्रीराधिकासहितपुरुषोत्तमाय नमः ॥ नैवेद्यं स० ॥ गायत्र्या संप्रो-क्ष्य ॥ धेन्वाऽमृती कृत्य ॥ ग्रासमुद्रां प्रदर्श्य ॥ यथा ॥ प्राणायनमः ॥ अपानाय नमः ॥ समानायनमः ॥ उदानायनमः ॥ व्यानायनमः ॥ अमृतोपस्तरणासि नमः ॥ नैवेद्यांते पूर्वापोशनं ॥

दर्शयेद्ग्रासमुद्रा तु प्रफुल्लोत्पल संनिभाम् ॥ प्राणादिमुद्राहस्तेन दक्षिणेन तु दर्शयेत् ॥ १ ॥ क्रमदीपिकायाम् ॥ कनिष्ठानामिके अंगुल्यौ स्वांगुष्ठ मूर्ध्ना चेत् स्पृशेत्तदा आद्या मुद्रा स्यात् ॥ प्राणाय नमः ॥ तर्जनीमध्यमेचेदंगुष्ठ मूर्ध्ना स्पृशेत्तदा द्वितीया ॥ अपानाय नमः ॥ एवं अनामिका मध्यमे चेत्स्पृशेत्तदा तृतीया ॥ व्यानायनमः ॥ अनामिका तर्जनी मध्यमाश्चेत् स्पृशेत्तदा चतुर्थी ॥ उदानायनमः ॥ ता अनामिका-तर्जनी मध्यमाः कनिष्ठा सहिताश्चेत् स्पृशेत्तदा पंचमीसमानायनमः ॥ इति नारद पंच रात्रे ॥

गंगादितीर्थाम्बुलवंगेवासितं सुधाकरः श्रीधवलं करेऽर्पितं ॥ प्रभाकरश्चाचमनं पवित्रितं ग्रहाण लक्ष्मी रमणार्पितं प्रभो ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ पूर्वापोशनं स० ॥ मध्येपानीयं ॥ शीतलं मधुरमुत्तमोत्तमम् वासितं बहुविधैः सुगंधिभिः ॥ स्वीकुरुष्व करुणानिधेप्रभो गांग मंबु कमलालयासह ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ मध्ये पानीयं स० ॥ उत्तरापोशनं ॥ श्रीराधिका स० पुरुषोत्तमाय नमः ॥ उत्तरापोशनं स० ॥

नैवेद्य शेषात् किंचित् इशान्यां प्रल्हादादि वैष्णवार्थं निक्षिपेत् तत् शेषं सर्वेभ्यो प्रदापयेत् ॥ नैवेद्यं तुलशी मिश्रं हत्या कोटि विनाशनं ॥

इति श्रीदत्तीये च आचार दर्श ॥

---

पछी धूप पात्रमां धूप सळीसळगावी भगवानने बतावयी. तथा दीवाकरी तेमनुं दीवानुं पूजनकरवुं तथा एक सारापात्रमां नानाप्रकारना लावेला मेवा मिठाइ विगेरे मुकी तेनापर तुलशीपत्रमुकी नैवेद्यनो संकल्प करवो, ते थयापछी गायत्रीमंत्रथी ते थाळीपर पाणीछांटी डावोहाथ आंखे अरकाडी जमणेहाथे भगवानने विधिवत् जमाडवा, तेमा पेहेला आचमन आपी मध्यमां पाणी मुकी उत्तर आचमन आपी हाथधोवाडी पाननी बीडी लवंगादीमूकी आपवी तथा पान सोपारी मुकी तेनापर यथाशकी दक्षणा मुकवी. दक्षणा मुकवानुं कारण ओछुंवधारे थयलुं पूर्णथाय तेजछे एप्रमाणे थयापछी अर्घ्य आपवानो चालछे, पण अहीं नआपता समाहीये आपवा योग्यछे हवे पछि राजोपचारनिमित्त चदन. पुष्प, हाथमा लइ, भगवाननी मानसीक उपचारोवडे पूजाकरी ते चंदन, पुष्प भगवानने चडावीदेवा.

अमृतोपिधानमसि नमः ॥ श्रीराधिका० हस्त० मुख प्रक्षालनार्थे जलं स०॥ श्रीराधिकास० करोद्वर्तनार्थे गंधं स० एलालवंगा क्रमुकैःसमेतं कर्पूरयुक् तांबुलिपर्णं आख्यं ॥ तांबूलमाभोग सुखायविष्णो ग्रहाणप्रीत्या भगवन्नमस्ते ॥ जातीफलेन्दु मृगनाभि सुगंधीयुक्तं एलालवंग खदिरारुण पूर्ण चूर्णं ॥ तांबूल वीटिकमनेकरसंसुरेश संकल्पितं स्ववदनांबुरुहे गृहाण ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ फलताम्बूलादियुक् विटिकां स० ॥ दक्षिणां ॥ न्यूनातिरिक्त परिपूजन पूर्तिकामः कामःप्रदाय कमलापतये प्रियाय ॥ नाथाय सर्वजगतां सुरवंदिताय मुद्रार्पणं भगवते तु समर्पयामि ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ दक्षिणां स० ॥ अथ आरात्रिकं ॥ रौप्यमया दिपात्रेस्वतिकं कृत्वा ॥ दीपान्प्रज्वाल्य ॥ दिपस्थदेवताभ्यो नमः ॥ गंधपुष्पं स० ॥ जयदेव जयदेव जय राधाजाने त्वदपरमधिपं स्मरहरमनसापिनजाने ॥ जयदेव जयदेव जयश्री त्रिगुणातीत ॥ जयअधिमासाधीश सहराधापुरुषोत्तम मां तारयजगदीश ॥ जय० ॥ राधावर पुरुषोत्तम मुरलीधरश्यामं निवासनिजगोलोक मोक्षपरं धामं ॥ वज्रांकुश कमलध्वज लांछन शुभचरणे नूपुर रत्नजडीत्र बहु कांचन भरणे ॥ जय० ॥ १ ॥ पीतांबर

कर्पूरेणतु यः कुर्यात् भक्त्या चैव मम ग्रतः ॥ आरात्रिकं द्विज श्रेष्ठ प्रविशेन्मामन्तकम् ॥ १ ॥ निराजनं तु यः पश्येत् सहोमासे ममाग्रतः॥ सप्तजन्म भवेद्विप्रो ह्यन्ते च परमं पदं ॥ २ ॥

अति सुंदर शोभित कटिभागे कटिमेखला सहकिंकिणि रत्नजडित रागे ॥ वक्षस्थल बहुदीपक तदुपरि भृगुचरणे कौस्तुभ मणिवनमाला लक्ष्मी मणिरमणे ॥ जय० ॥ २ ॥ हास्योपेतं वदनं बिंबाधरयुगुलं नेत्रे कज्जल भाले कस्तूरी तिलकं ॥ अलकावलि बहुरंजित मुकुटे शिखिपुच्छं काने कुंडल मुक्ता फलसह मणिगुच्छं ॥ जय० ॥ ३ ॥ तिलकुसुमोपमनाशं पंकज दलनयने ससस्वर संवादित मुरलीवरवदने ॥ कंठे मुक्ताहार रत्नमया भरणे वक्षस्थल श्री सेवित बहुबाहूरमणे ॥ जय० ॥ ४ ॥ चंपक मय वपुभाले कुंकुम बिंदि राजे सर्वांगे मणिभूषण रक्तांबर छाजे ॥ चंद्रवदन गजगामिनि कोकिल स्वरगाजे राधा रूपमनोहर अमर युवति लाजे ॥ जय० ॥ ५ ॥ एवं युगुलस्वरूपं राधा सह द्विभुजं ध्यानं आरतिसमये कृत्वा हरिद्विभुजं ॥ भक्त्या करोति दास नीरांजन दारं अघनाशन भवमोचन तारय भवपारं ॥ जय० ॥ ६ ॥ स्मरण निरांजन समये नारायण विष्णो राधापति पुरुषोत्तम वामन प्रभुजिष्णो ॥ श्रीराधाकृष्ण स्वरूपं ममहृदये वसितं किंकरनागर नमामि श्री चरणे व सितं ॥ जय० ॥ ७ ॥ शारदेन्दी वरस्यामं त्रिभंगललिताकृतिम् ॥ नीराजयामि देवेशं राधया सहितं हरिम् ॥ १ ॥ समस्त चक्र चक्रेश युतोदेव नवात्मक ॥ आरात्रिकमिदं तुभ्यं गृहाण मदनुग्रह ॥ १ ॥ अंतस्तेजो बहिस्तेजो एकीकृत्य मितप्रभा ॥ त्रिधादिवं सविभ्राम्य कूले दीपं निवेदयेत्॥२॥

मंगलं भगवान्० ॥ श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ नीराजनं स० ॥ जलेन प्रदक्षिणी कृत्य ॥ पुष्पं गृहीत्वा ॥ देवोपरी निक्षिपेत् ॥ आत्मनाभिवंदनम् ॥ हस्तप्रक्षालनम् ॥ प्रदक्षिणां ॥ नश्यन्तु पापानि च ये कृतानि जन्मान्तरे गुरुलघुन्यथ वेहजन्मनी ॥ प्रदक्षिणेनैव तु माम् समुद्धर योगीश पूर्णकृपया शुभवा विधमध्यात् ॥ रक्ष रक्ष जगन्नाथ रक्षत्रैलोक्य रक्षक ॥ भक्तानुग्रहकर्तात्वं प्रदक्षिणां ग्रहाणमे ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ प्रदक्षिणां स० ॥ मंत्रपुष्पांजलीं ॥ **अंजलौ पुष्पाण्यादाय**ः ॥ तवचरणसरोजे मन्मथश्चंचरीको भ्रमतु सततमीशे प्रेमभक्त्यासरोजे ॥ भुवन विभव भोगात्तापशांत्यौषधाय दृढसूपरिपक्वां देहि भक्तिं च दास्यं ॥ १ ॥ भवजलधि निमग्न श्चित्तमीनोमदीयो भवति सततमस्मिन्घोर संसार

शंखे कृत्वा तु पानीयं भ्रामितं केशवोपरि ॥ सन्निधौ वसते विष्णोः कल्पांतं क्षीर सागरे ॥ १ ॥ मंगलार्थं माहाराज नीराजनमिमं हरेः ॥ सगृहाण जगन्नाथ कृष्णचंद्र नमोस्तुते ॥ २ ॥ इति हरि भक्ति विलासे ॥

---

हवे दरेक देवनी जुदी आरती करवी जोइये छे, ते पण कर्पूरथीजथवी जोइये तेथतीनथी पण करवी योग्य छे. माटे एक उत्तम पात्रमा सार्थीयोकाढी अथवा चोखा मुकी तेनापर कर्पूर सळगावी मुकवु, तथा ते पात्रलइ देवनेजोवा ब्राह्मणो तेनेमाटे ते वखते देवनागुणो गाय छे. जेनाथी ठाकोरजी प्रसन्न थाय छे, आरती करवानो विधि (४) पग अगाडी (२) नाभी पासे (१) मोडा आगळ (७) सगळे शरीरे ए प्रमाणे आरतीना आटा उतारी. नीचे मुकवी.

कूपे । विषयमति विनंद्य सृष्टि संहार रुप मपनयतवभक्तिं देहि पादारविंदे ॥ २ ॥ तव निज जन सार्धं संगमो मे
मदीश भवतुविषयवंध च्छेदने तीक्ष्ण खड्गः ॥ तव चरण सरोजे स्थानदानै कहेतु जंनुपि जनुपि भक्तिं देहि
पादारविंदे ॥ ३ ॥ बालंनीलांबुजाभ मतिशयरुचिरं स्मेरवक्त्रांबुजं तं ब्रह्मेशानं तथैमैः कतिकतिदिवसैः स्तूयमानं
परं यत् ॥ ध्यानात्साध्यं रुषिंद्रै मुंनिगणमनुजैः सिद्ध संघै रसाध्यं योगींद्राणामचिंत्य मतिशयमतुलं साक्षि रुपं
भजेऽहम् ॥ ४ ॥ यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च ॥ यज्ञानां पतये नाथ गोविंदाय नमोनमः ॥ ५ ॥ जितं-
ते पुण्डरीकाक्ष नमस्ते विश्वभावने ति० श्री राधिकासहित पुरुषोत्तमाय नमः ॥ मंत्रपुष्पांजलिं स० ॥ स्तुतिपाठः ॥
भूपादो यस्यनाभि र्वियदसुरनिल श्चंद्रसूर्यौच नेत्रे कर्णावासाशिरोद्यौ मुंखमपिदहनो यस्यवास्ते यमब्धिः ॥ अंत

पूजांते विष्णोश्चरणामृतं पिबेत् ॥ तदुत्तराङ्गत्वात् ॥ येतु उपवास दिने भाक् कर्मणश्च न पिबंति ते भ्रांताः ॥ जलं न येषां तुलसी विमिश्रं पादोदकं चक्रशिला समुद्भवं ॥ नित्यं त्रिसंध्यं पुत्रतेन गात्रं खगेन्द्रते धर्म बहिष्कृता नराः ॥ इति आन्हिक प्रदीपे ॥ विष्णोः पादोदकं पीत्वा

---

तथा तेनी चोर बाजुये पानीनी धारा करवी तथा ते आरतीपर पुष्पधरी देवने चडाववा तथा आरती लेवी हाथ धोवा ए आचार छे, ते करीने खोबोभरीने पुष्प पुष्प लइ मंत्रो प्रार्थनाना भणाया पछी देवोपर चडावी देवा एने मंत्र पुष्पांजलि कहे छे, तथा देवनी प्रदक्षणा करावी ते शंखमां पाणी भरीने अथवा पुष्प लइने करवानो चाल छे.

स्थं यस्य विश्वं सुर नर खगगो भोगि गंधर्वदैत्यै श्चित्रं रं रम्यतेतं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ १ ॥
विश्वेश्वराय विश्वाय तथा विश्वोद्भवायच ॥ विश्वस्य पतये तुभ्यं गोविन्दाय नमोनमः ॥ २ ॥
वंदे कृष्णगुणातीतं गोविंदमेकमक्षरं ॥ नविंदे निरदस्यामं कन्दर्प सुंदरं हरिं ॥ ३ ॥ वृंदावन वनाभ्यन्तं
रासमंडल संस्थितम्॥लसत्पीत पटं सौम्यं त्रिभंग ललिता कृतिं॥४॥रासेश्वरं रासवासं रासोल्लास समूल्कं॥द्विभुजं
मुरलीहस्तं श्री वत्सकीर्तिमच्युतं॥५॥नौमी नव घनश्यामं पीतवास समच्युतम्॥श्रीवत्सभासितोरस्कं राधिकासहि-
तं हरिं॥श्रीराधिकासहित पुरुषोत्तमायनमः॥स्तुतिपाठं स०॥**विशेषार्घः** ॥नालिकेरं॥ श्रीफलं श्रीपदं प्रोक्तं श्री-

पश्चाद शुचि शंकया ॥ यश्चाचामति संमोहात् ब्रह्महत्यां सविंदति ॥ पादोदकं पिबेन्नित्यं नैवेद्यं भक्षये द्धरेः ॥ शेषंच मस्तके धाय इति वेदानु
शासनं ॥ शालग्राम शिलातोय मपित्वा यस्तु मस्तके ॥ प्रक्षेपणं प्रकुर्वीत ब्रह्महास निगद्यते ॥ शालग्राम शिलातोयं पिबेद्ग्राम करेणतु ॥
अज्ञाना दैदवं प्रोक्तं ज्ञानादर्द्धं समाचरेत् ॥ विष्णोः पादोदकं पीत्वा कोटि जन्माघनाशनं ॥ तदेवाष्ट गुणं पापं भूमौ बिंदु निपातनात् ॥
आयसे च तथा कांस्ये काष्ठे वालांबुके तथा ॥ उधृत्य पादसलिलं मद्यतुल्यं विनिर्दिशेत् ॥ श्रीविष्णोः पादसलिलं करे कृत्वा मुखे क्षिपेत् ॥

---

मळी, छत्र, पादुका, विजणो, आरसो, चामर, विगेरे होय ते उपचारो करवानाठे, एवीरीते यथापठि समयानुसार स्तुतीकरी यथाशक्ति जपकरवो तथा
तेनो सकल्पकरी विशेषार्घ आपवा तथा ब्राह्मणभोजननो सकल्प करवो भूयसीनो सकल्पकरी ब्राह्मणपूजन यथापजी ब्राम्हणोए आशीर्वाद आपवा, करेलु कर्म

फलं सुखवर्धनम् ॥ श्रीफलार्घं प्रदानेन प्रसीद पुरुषोत्तम ॥ श्रीराधिकासहित पुरुषोत्तमायनमः ॥ विशेपार्घ्यं
स० ॥ १ ॥ फलं गृहीत्वा ॥ देवदेव नमस्तुभ्यं पुराण पुरुषोत्तम ॥ गृहाणार्घ्यं मयादत्तं राधयासहितो हरे ॥
श्रीराधिकासहित पुरुषोत्तमायनमः ॥ विशेपार्घ्यंस० ॥२॥ फलं गृहीत्वा ॥ देवदेव महादेव प्रलयोत्पत्तिकारक ॥
ग्रहाणार्घं मयादत्तं राधयासहितो हरे॥श्रीराधिका सहित०विशेपार्घ्यं॥३॥शक्त्या जपं कुर्यात्॥ ॠीं नमो भगवते
वासुदेवाय ॥ इति जपानंतरं मालां शिरसि निधाय ॥ गुह्यातिगुह्य गोप्त्रीत्वं गृहाणास्मत् कृतं जपम् ॥ सिद्धिर्भवतु
मे देवी त्वत्प्रसादात्सुरेश्वरि ॥ हस्ते जलमादाय ॥ यथाज्ञानेन कृतजपाख्येन कर्मणा श्रीराधिका सहित
पुरुषोत्तमः प्रीयतां ॥ कृतस्य कर्मणः सांगता सिध्यर्थं आचार्यादीन् अद्येन्हि भोजयिष्ये ॥ पुनर्जल मादाय ॥
अदत्वा पित्रते तोयं रौरवे नरके वसेत् ॥ अदत्वा विप्रनसे नादिभ्य इति ॥ ग्रहणमंत्रः ॥ अकाल मृत्यु हननं सर्वव्याधि विनाशनं ॥ विष्णोः
पादोदकं पीत्वा शिरसा धारयाम्यहं ॥ इति हेमाद्रौ माधवीये ॥ वा मूलेन चरणोदकं पीत्वा नैवेद्यादिकं देवस्य भक्त्या विभज्य दत्वा ॥ साय-
मपि भुक्त्वा सुखेन विहरेत् ॥ इति गोविंदार्चन चंद्रिकायां ॥

भगवानने अर्पण करवुं तथा भगवाननुं चरणामृत पेलार्थी नापीवूं होयतो लेवु तथारात्री भगवानना स्मरण पूर्वक गीत वार्जित्र पुरःसर व्यतीत करवी, एटलुं
प्रथम दिवसनुकृत्य संपूर्णथयुं, पछी बीजे दिवसे सवारे पोतानुं नित्यकर्म परवारी पोतानाआसनपर आवी बेसवुं, तथा स्थापितदेवोनुं यथाशक्ति पूजन करवुं, ते

कृतस्य० गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दास्ये ॥ आशिर्वादः ॥ स्वस्तियाचा० ॥ अग्निरिव शुचिर्भव आदित्यइव तेजो भव ॥ विष्णुरिव श्रीमान् भव ब्रह्मायुरायुर्भव आयुर्भव ॥ १ ॥ इमेश्रिये पद्महस्ते सुगंधे वक्षस्थले पुण्य सुजायमानैः ॥ प्रमोदमानै रभिमन्यमानैः पुत्रैः पौत्रैर्वर्धतां दीर्घमायुः ॥ २ ॥ सुभगे वरुथं वंध्वो भागमौषधिं प्रब्रवीमि ॥ आकल्याणि तनुवा शुंभमाने रयिंपुत्रान्सततंदीर्घमायुः ॥ २ ॥ देवस्यगेहे मुनयो वसन्ति देवानां कवयः पार्थिवासः ॥ देवा इदंमे सुमनस्यमानौ दिवि देवा वसवो दीर्घमायुः ॥ ३ ॥ मंत्रार्थो० इत्याशिर्वादः ॥ तिलकं कत्वा अनेन यथाज्ञानेन यथावकाश पूजन कृतेन राधिकासहित पुरुषोत्तमाद्यावाहित देवताः प्रीयंतां ॥ शक्तिश्चेत ॥ गीतशास्त्र पुराणकथा श्रवणादिना रात्रिंनिनयेत् ॥ **इति पुर्वदिवस कृत्यं** ॥ द्वितीयेन्हि प्रातरुत्थाय ॥ नित्यवतस्नात्वा ॥ नित्यकर्म समाप्य ॥ स्वासने उपविश्य ॥ पूर्व स्थापित गणपत्यादिदेवतानां शक्त्या पूजनं समाप्य स्थंडिल समीपे गत्वा उपविश्य ॥ आचम्य प्राणानायम्य ॥ अद्येत्यादि० कृतोद्यापनाङ्गभूतं

---

यथापाडे कुंड अथवा स्थंडिलपासे जइ संकल्पकरवो तेना बेपक्षछे. एक तो स्थापनकरेला देवोनेज दशांश आपवो अथवा सग्रहसंकल्पकर्यो होयतो तेमनो जे पक्षराख्यो होय तेप्रमाणे तेमनो होम करवोजोइये. हवे केवळ तेज विधान लख्युंछे, मोटोपक्ष लेवोहोयतो पेहेला प्रकरणना २४ पत्रथी प्रधानपूर्वक

विहित होमं करिष्ये॥तत्रादौ निर्विघ्नता सिध्यर्थं गणपति स्मरण पूर्वक मग्निस्थापनं करिष्ये ॥ श्रीगणेशायनमः ॥
सुमुखश्चैकदंतश्च कपिलो गज कर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो
गजाननः ॥ ( कृतव्रताङ्गभूतं ग्रहमख सहितमुक्त हवनं करिष्ये ) ॥ तदङ्गभूत मद्यान्हि विहितं
प्रथम प्रकरण स्थित गणपति पूजनादारभ्य ग्रहहोमान्तं पूर्ववत् कृत्वा॥आचार्यः जलं गृहीत्वा ॥ यजमानानुज्ञया
पंच भू संस्कारपूर्वक अग्निप्रतिष्ठां करिष्ये ॥ दर्भैः परिसमुह्य त्रिवारं ॥ गोमयेनउपलिप्य त्रिवारं ॥
कुशेनउ ल्लिख्य त्रिवारं ॥ अनामिकांगुष्ठेनउधृत्य त्रिवारं ॥ उदकेनाभ्युक्ष्य त्रिवारं ॥ अग्निमुपसमाधाय ॥
आत्माभिमुखमग्निं संस्थाप्य ॥ दक्षिणतो ब्रह्मासनं ॥ उत्तरतः प्रणितासनं ॥ यावत् कर्म समाप्यते तावत्त्वं ब्रह्मा
भव ॥ ब्रह्मानुज्ञातः उत्तरे प्रणीता प्रणयनं ॥ वामकरेण प्रणीतां संगृह्य ॥ दक्षिणकरेण जलं प्रपूर्य ॥ भूमौ
निधाय ॥ आलभ्य उत्तरतोग्नेः स्थापनं ॥ बर्हिः प्रदक्षिणमग्नेः परिस्तरणं ॥ पूरस्तात् दक्षिणतः पश्चात् उत्तरतश्च॥

अनंतं चोपवीतं च दीप दुर्वा हुताशनः ॥ अप्रतिष्ठा सदाकार्या प्रतिष्ठा हानिदा भवेत् ॥ १ ॥ इति गोविंदार्चन चंद्रिकायां ॥

पूर्णाहुतिलगि नोहेम लइ समाप्त करवो, यजमाने आचमन प्राणायामकरी जळलइ केहेवुं. उत्तहोमकरंछउं. पछी गणपतिस्मरणकरी पंचभूसंस्कारकरी.

एवंत्रिः ॥ पात्राऽसादनं ॥ पवित्रछेदनादर्भास्त्रयः ॥ पवित्रे द्वे प्रोक्षणीपात्रं ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्जनकुशाः पंच ॥ उपयमनकुशाः सप्त ॥ समिध स्तिस्रः ॥ स्रुवः ॥ स्रुची ॥ आज्यं ॥ तण्डुलाः पूर्णपात्रं ॥ अनामिकांगुष्ठेन द्वयोरग्रं छेदयेत ॥ द्विग्राह्यं ॥ त्रिणि क्षिपेत ॥ प्रोक्षणीपात्रे प्रणितोदकमापिंच्य ॥ उत्पवनं उद्दिंगनं ॥ प्रणीतोदकेन प्रोक्षणीनां प्रोक्षणं ॥ आज्यस्थालिं प्रोक्षयामि॥ चरुस्थालिं प्रो०॥संमार्जन कुशान् प्रो०॥ उपयमनकुशान् प्रो० ॥ समिधः प्रो० ॥ स्रुवं प्रो० ॥ आज्यं प्रो० ॥ तण्डुलान् प्रो० ॥ पूर्णपात्रं प्रो० ॥ प्रणीताग्न्योर्मध्ये प्रोक्षणीनां निधानं॥आज्य स्थाल्यामाज्य निर्वापः॥चरुस्थाल्यां तण्डुलप्रक्षेपः॥ तस्यत्रिःप्रक्षालनं ॥ प्रणीतोदकमापिंच्य॥दक्षिणतः आज्याधिश्रयणं॥मध्ये चरोरधिश्रयणं॥गृहीतोल्मुकेन पर्यग्निकरणं॥अर्ध श्रिते चरोः स्रुवप्रतपनं॥संमार्जनकुशैः स्रुवस्य संमार्जनं॥अग्रैरग्रं॥मूलैर्मूलं॥प्रणीतोदकेनाभ्युक्षणं॥ पुनःप्रतपनं॥ देशेनिधानं ॥

अमेध्यसेविनी वंध्यां प्रसूताम्यो न गोभयं ॥ जीर्णायाश्चैव लेपार्थं माहरेत्तु माहिषं ॥ इति रेणुकारिकायां ॥

---

अग्नि स्थापनकरी कुशकंडी करी लेवी तथा आघारादी आहुति आपी. यजमानपासे त्यागसंकल्प करावयो, प्रधानहोमनी आहुति ( १०००० ) आपवी जोइए, ते न बने तो ( १००० ) अथवा ( १०० ) तेना प्रमाणे तेना देवताओनी ( २८ ) अथवा ( ८ ) अथवा एक अनुक्रमे

पवित्राभ्यामुत्पवनं ॥ आज्यावेक्षणं ॥ अपद्रव्य निरसनं ॥ प्रोक्षिण्याः प्रत्युत्प-
आज्योद्वासनं ॥ चरोरुद्वासनं ॥ पवित्राभ्यामुत्पवनं ॥ आज्यावेक्षणं ॥ अपद्रव्य निरसनं ॥ प्रोक्षिण्युदक शेषेण सपवित्रहस्तेन अग्नेः पर्युक्षणं ॥
वनं ॥ उपयमनकुश ग्रहणं ॥ तिष्ठत् समिधोभ्याध्याय ॥ ब्रह्मन्वारब्धः स्रुवेण जुहुयात् ॥ प्रजापतये नमः ॥ इदं० ॥
पवित्रयोः प्रणीतासु निधानं ॥ दक्षिणं जान्वाच्य ॥ सोमाय नमः ॥ इदं० ॥ वरदनामानमग्निमावाहयामि ॥ वरद
इंद्राय नमः ॥ इदं० ॥ अग्नये नमः ॥ इदं० ॥ सोमाय नमः ॥ इदं० ॥ वरदनामानमग्निमावाहयामि ॥ वरद
नाम्ने वैश्वानराय नमः॥ गंधं स० पुष्पं० धूपं० दीपं० नैवेद्यं० अनया पूजया अग्निः प्रीयतां॥**त्याग संकल्पः**॥
इदं संपादितं समिच्चरुतिलाज्यादि हविर्द्रव्यं या या यक्षमाण देवतास्ताभ्यः ताभ्यः मया परित्यक्तुं नमम ॥ यथा-
दैवतमस्तु ॥ **अथ प्रधानहोमः** ॥ समित्तिलाज्यचरुणा वा पायसेन जुहुयात् ॥ ( ह्रीं भगवते वासुदेवाय

गृह्याग्नौ तु पचेदन्नं लौकिके वापि नित्यशः ॥ यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते ॥ इति मनुक्तेः ॥ विज्ञानेश्वरा परार्क मेधाति
थयो प्येव माहुः ॥

लेवी, प्रधाननी ( १०० व्यहनी ( २८ ) ने परिवार देवतानी ( १ ) तथा ब्रम्हादिनी पण ( १) एवीरीते ते ते कोठांना प्रत्येक देवने उद्देशीने समजवु,
तथा ओछुं वधारेधयुं होय तो पण परिपूर्णथवा व्याहृतीनो होमपण पूर्वनी आहुतीना प्रमाणे करवो,

नमः इति ) अयुतं वा सहस्रसंख्यया जुहुयात् ॥ अथवा ह्रीं श्रीराधिकासहित पुरुषोत्तमाय नमः ॥ इति सर्वत्र सप्रणव मंत्रेणोक्तसंख्यया होमं समाप्य ॥ ततो परिवारादिदेवान् एकैकामाज्याहुतिं दद्यात् ॥ चतुर्व्यूहदेवान् अष्टाविंशति संख्यया ॥ वासुदेवायनमः ॥ २८ ॥ १ ॥ हलधराय नमः ॥ २८ ॥ २ ॥ प्रद्युम्नायनमः ॥२८॥ ॥ ३ ॥ अनिरुद्धायनमः ॥ २८ ॥ ४ ॥ एताव्यूहदेवताः ॥ जिष्णवेनमः ॥ १ ॥ विष्णवे० ॥ २ ॥ महाविष्णवे० ॥ ३ ॥ हरये० ॥४॥ कृष्णाय० ॥ ५ ॥ अधोक्षजाय० ॥ ६ ॥ केशवाय० ॥ ७ ॥ माधवाय० ॥ ८ ॥ रामाय० ॥ ९ ॥ अच्युताय० १० ॥ पुरुषोत्तमाय० ॥ ११ ॥ गोविन्दाय० ॥१२॥ वामनाय० ॥१३॥ श्रीशाय० ॥१४॥ श्रीकण्ठाय० ॥१५॥ विश्वसाक्षिणे० ॥ १६ ॥ नारायणाय० ॥ १७ ॥ मधुरिपवे० ॥१८॥ अनिरुद्धाय० ॥ १९ ॥ त्रिविक्रमाय० ॥ २० ॥ वासुदेवाय० ॥ २१ ॥ जगद्योनये० ॥ २२ ॥ शेषतल्पगताय० ॥ २३ ॥ संकर्षणाय० ॥ २४ ॥ प्रद्युम्नाय० ॥ २५ ॥ दैत्यारये० ॥ २६ ॥ विश्वतोमुखाय० ॥२७॥ जनार्दनाय० ॥२८॥ धराधाराय० ॥ २९ ॥ श्रीधराय० ॥ ३० ॥ एताः परिवारदेवताः ॥ मंडुकादि देवताः ॥ मंडुकाय० ॥ १ ॥ मूल-

अन्न दान भागवतोक्त. मंडुकादि परिवार देवतानां स्थापनं स्वीकृतं ॥

अनंताय० ॥ ५ ॥ वराहाय० ॥ ६ ॥ पृथिव्यै०
प्रकृत्यै० ॥ २ ॥ आधारशक्त्यै० ॥ ३ ॥ कूर्माय० ॥ ४ ॥
॥ ७ ॥ सुधांबुधाय० ॥ ८ ॥ मणिद्वीपाय०॥९॥चिंतामणिग्रहाय०॥१०॥स्मशानाय०॥११॥ पारिजाताय०॥१२॥
रत्नवेदिकायै० ॥ १३ ॥ रत्नसिंहासनाय० ॥१४॥ धर्माय० ॥ १५ ॥ ज्ञानाय० ॥ १६ ॥ वैराग्याय० ॥ १७ ॥
ऐश्वर्याय० ॥ १८ ॥ अधर्माय० ॥ १९ ॥ अवैराग्याय० ॥ २० ॥ अनैश्वर्याय० ॥ २१ ॥ आनंदकंदाय०॥२२॥
संविन्नालाय० ॥ २३ ॥ सर्वतत्वात्मकपद्माय० ॥ २४ ॥ प्रकृतिमयपत्रे० ॥ २५ ॥ विकारमयकेसरेभ्यो० ॥ २६ ॥
पंचाशद्वर्ण बीजाढ्य कर्णिकायै० ॥ २७ ॥ अं द्वादशकलात्मने सूर्यमंडलाय० ॥ २८ ॥ चं षोडशकलात्मनेचंद्र
मंडलाय० ॥ २९ ॥ मंदशकलात्मने वन्हिमंडलायनमः ॥ ३० ॥ सं सत्वाय० ॥३१॥ रं रजसे० ॥३२॥ तं तमसे०
॥ ३३ ॥ आं आत्मने० ॥ ३४ ॥ अं अंतरात्मने० ॥ ३५ ॥ पं परमात्मने० ॥ ३६ ॥ ऱ्हीं ज्ञानात्मने० ॥ ३७ ॥
एताः मंडुकादिदेवताः ॥ ब्रह्मादि देवताः ॥ ब्रह्मणेनमः ॥ १ ॥ सोमायनमः ॥ २ ॥ ईशानाय० ॥ ३ ॥
इंद्राय० ॥ ४ ॥ अग्नये० ॥ ५ ॥ यमाय० ॥ ६ ॥ निर्ऋतये० ॥ ७ ॥ वरुणाय० ॥ ८ ॥ वायवे० ॥ ९ ॥ अष्टव
सूभ्यो० ॥ १० ॥ एकादश रुद्रेभ्यो० ॥ ११ ॥ द्वादशादित्येभ्यो० ॥ १२ ॥ अश्विभ्यां० ॥ १३ ॥ विश्वेभ्यो दे-

वेभ्यो० ॥ १४ ॥ सप्तयक्षेभ्यो० ॥ १५ ॥ नवकुलनागेभ्यो० ॥ १६ ॥ गंधर्वाप्सरोभ्यां० ॥ १७ ॥ स्कंदाय० ॥ १८ ॥ नंदीश्वराय० ॥ १९ ॥ शूलाय० ॥ २० ॥ महाकालाय० ॥ २१ ॥ दक्षादि सप्तगणेभ्यो० ॥ २२ ॥ दुर्गायै० ॥ २३ ॥ विष्णवे० ॥ २४ ॥ स्वधायै० ॥ २५ ॥ मृत्युरोगाभ्यां० ॥ २६ ॥ गणपतये० ॥ २७ ॥ अद्भ्यो० ॥ २८ ॥ मरुद्भ्यो० ॥ २९ ॥ पृथिव्यै० ॥ ३० ॥ गंगादिनदीभ्यो० ॥ ३१ ॥ सप्तसागरेभ्यो० ॥ ३२ ॥ मेरवे० ॥ ३३ ॥ गदायै० ॥ ३४ ॥ त्रिशूलाय० ॥ ३५ ॥ वज्राय० ॥ ३६ ॥ शक्त्यै० ॥ ३७ ॥ दंडाय० ॥ ॥ ३८ ॥ खड्गाय० ॥ ३९ ॥ पाशाय० ॥ ४० ॥ अंकुशाय० ॥ ४१ ॥ गौतमाय० ॥ ४२ ॥ भरद्वाजाय० ॥ ४३ ॥ विश्वामित्राय० ॥ ४४ ॥ कश्यपाय० ॥४५॥ जमदग्नये० ॥४५॥ वसिष्ठाय० ॥४७॥ अत्रये० ॥ ४८ ॥ अरुंधत्यै० ॥ ४९ ॥ ऐंद्रयैन० ॥ ५० ॥ कौमार्यै० ॥ ५१ ॥ ब्राह्म्यै० ॥ ५२ ॥ वाराह्यै० ॥ ५३ ॥ चामुंडायै० ॥ ५४ ॥ वैष्णव्यै० ॥ ५५ ॥ माहेश्वर्यै० ॥ ५६ ॥ वैनायक्यै० ॥ ५७ ॥ एताः ब्रह्मादिदेवताः ॥ ततो न्यूनातिरिक्त दोषपरिहारार्थं अष्टविंशति संख्यया तिलद्रव्येण व्याहृतिहोमं करिष्ये ॥ अग्नि वायु सूर्येभ्यो नमः ॥२८॥ होमं समाप्य ॥ कृतस्य कर्मणः सांगतासिध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तर पूजनं करिष्ये ॥ इति संकल्प्य पूजयेत ॥

मृडाग्नये नमः ॥ गंधं पुष्पं धूपं दीपं नैवेद्यं समर्पयामि ॥ (ततो ग्रहादीनां स्थापनं कृतं चेत् तेषां उत्तर पूजनं कार्यं ॥ ) ततो गणपत्यादि स्थापित देवतानां यथा शक्त्या पंचोपचारैः पूजनं कुर्यात् ॥ स्विष्टकृद्धोमः ॥ अ-ग्नये स्विष्टकृते नमः ॥ इदमग्नये स्विष्टकृते नमम ॥ ततो नवाहुतयः ॥ अग्नये० इदमग्नये नमम ॥ १ ॥ वायवे नमः ॥ इदं वायवे० ॥ २ ॥ सूर्याय० इदं सूर्याय० ॥ ३ ॥ अग्निवरुणाभ्यां० इदमग्निवरुणाभ्यां ॥ ४ ॥ अग्निवरुणाभ्यां०इदमग्निवरुणाभ्यां नमम ॥ ५ ॥ अग्नये अयसे नमः ॥ इदमग्नये अयसे नमम ॥ ६ ॥ वरु-णाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो नमः ॥इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम ॥ ७ ॥ वरुणायादित्यायादितये च नमः ॥ इदं वरुणायादित्यायादितये च नमम॥८॥ प्रजापतये नमः॥ इदं प्रजापतये नमम ॥ ९॥ **अथ बलिदानं** ॥ इन्द्रादी दश दिक्पालेभ्यः सांगेभ्यः सपरिवार

अर्थ—होमथयापछि मृडाग्निना पूजन पूर्वक स्थापित देवोनुं उत्तर पूजन करावी. स्विष्टकृद्धोम करी नवाहुतियो आपवी, तथा इन्द्रादी दशदिक्पालोनु बली मूकावी पूर्णाहुति होमकरावबो. स्रुचिमां घृतभरीने तेनाउपर नालिकेरमुकीने जेदेवनु प्रधानत्वहोय तेनामत्रो भणी ( जीततेपुण्डरीकाक्षभणी ) ने नालीकेर होमवुं एने पूर्णाहुति कहेछे, ते थयापछि बीजु एकसोपारी लइ स्रुवामांरा घृतलइ तेनापरमुकी ( नमोस्त्वनंतायभणी० ) होमवुं पछी इशाने रुद्रकलश-पासे त्याग आपी. कुंडना इशानकोणमाथी भस्मलइ यजमाननाकपाळे करवी पछी स्रुवामापाणी मुकावी कुशाडी समस्त करवी तथा ब्रह्माने पूर्णपात्र आपवुं, तेमां·

भ्यः सायुधेभ्यः सशक्तिकेभ्यः ॥ इमं यथोपनीतं बलिं समर्पयामि॥भो इंद्रादिदशदिक्पालाः दिशं रक्षत बलिं भक्षत मां सकुटुंबं रक्षत॥मम गृहे आयुःकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः वरदाः भवत ॥ अनेन बलिदानेन इंद्रादि दशदिक्पालाः प्रीयंतां नमम ॥ कृतस्य कर्मणःसांगता सिध्यर्थं पूर्णाहुतिहोमं करिष्ये॥ स्रुचीं घृतेन पूरयित्वा स्रुवोपरि निधाय॥ शक्रादयस्तुतिभिर्वा विष्णुमंत्रैः पूर्णाहुतिहोमं कुर्यात॥ ततो ईशानात् भस्म गृहीत्वा॥ यथाशस्त्र प्रहाराणां कवचं भववारणं ॥ एवं दैवोपघातानां शांतिर्भवति वारुणं ॥ यजमानस्य ललाटादिषु कृत्वा ॥ संकल्पः॥ आघारावादि पूर्णाहुतिपर्यंतं येन येन मंत्रेण हुतं यावत यावत संख्याकं द्रव्यं यस्यै यस्यै देवतायै यावन्त्यो यावन्त्या-हुतयः सा सा देवता प्रीयतां ॥ संस्रवप्राशनं ॥ पवित्राभ्यां मार्जनं ॥ अग्नौ प्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानं कृतस्य॰ ब्रह्मन् इदं तुभ्यमहं संप्रददे ॥ प्रणिताविमोकः ॥ गच्छ गच्छ सुरश्रेष्ठ अजासंतानवाहन ॥ यत्र ब्रह्माद-

---

(मण१॥ सेर४ चोखा तेनुं पूर्णपात्र केवायछे ) तेने बदले यजमाननी श्रद्धाप्रमाणे मुकावी अपायछे,एप्रमाणेनो सघळो विधि थयापछि अग्निविसर्जन कराववु. तेमा पानसोपारी एकठाकरी होमवानो चालछे पण मत्रथीज करवुं जोइये.ते थयापछि पूजाकरनारना सासरेथी चाल्लो एटले वस्त्र विगेरे आपवानो जे चाल होय ते करावी फरीथी पूर्वना स्थापन करेला देवपासे जइ पाटलापर बेसवु.

यो देवा स्तत्र गच्छ हुताशनः॥ यान्तु देवगणाः सर्वे पूजामादाय मामकीम्॥इष्टकामसमृध्यर्थं पुनरागमनाय च॥ आरात्रिकं अग्निं विसृज्य ॥ यथाचारं कृत्वा ॥ प्रणमेत् ॥ देवतानां समीपे गत्वा गंधादिभिः पूजयित्वा ॥ मंत्रपुष्पांजलिं स्तुतिपाठं ब्राह्मणपूजनं आचार्यादीनां दक्षिणाप्रदानं तिलपात्रादिदानसंकल्पं कृत्वा॥कृतस्य कर्मणः सांगतासिध्यर्थं ताम्रपात्रं तिलपूरितं रुद्रदैवतं गंधपुष्पाद्यार्चितं शास्त्रोक्त पुण्यफलप्राप्तये आचार्याय दास्ये ॥ कृत- स्य० इदं कांस्यपात्रं घृतपूरितं सूर्यदैवत्यं सूर्यलोकफलप्राप्त्यर्थं शास्त्रो० आ० ॥ कृतस्य०इदं ताम्रपात्रं जलपूरितं वरुणदैवतं शास्त्रो० आ० ॥ कृतस्य० उमामहेश्वरवस्त्राणि गंधपुष्पाद्यार्चितानि शास्त्रो० आ० ॥ अनया रीत्या ॥ पदं गोदानं ॥ शैय्यादीनि दत्वा ॥ तिलकमाशीर्वादः॥ स्वस्तियाचा०॥ **मंडलदानं कुर्यात्** ॥ इदं सर्वतोभद्र- मंडलं दास्यमानोपस्कर सहितं यजमानोपस्कररहितं गंधपुष्पाद्यार्चितं श्रीराधिकासहित पुरुषोत्तम पदप्राप्तये आचा यांय दास्ये ॥ दानसांगतासिध्यर्थं दक्षिणां दास्ये ॥ अद्येत्यादि० मया यथाशक्ति यथामिलितोपचारद्रव्यैः श्रीरा-

अर्थ–स्थापितदेवोनु पंचोपचारे पूजनकर्ता प्रथमदिवस प्रमाणे आरतीमंत्रपुष्पांजली स्तुतिपाठ प्रदक्षिणा जपविगेरे करीने दानो आपवानो संकल्प करवो, तेमा तिलपात्र ताम्रपत्र वरुणपात्र, छत्री, सुवर्ण, पुस्तक, अन्न,कुंभ मालपुडा ब्रह्माण्डवीगेरे दानोनो संकल्प करीने प्रत्यक्ष होय तो आपवा. जे प्रत्यक्ष न होय–

धिकासहित पुरुषोत्तम पूजनाख्येन कर्मणा श्रीगोलोकस्थित श्रीराधापुरुषोत्तमः प्रीयतां ॥ **अथ पूपवायन-दान प्रयोगः** ॥ घृतहिरण्यसहितान् त्रयस्त्रिंशदपूपान्कांस्यपात्रे निधाय दद्यात् ॥अथ प्रयोगः ॥अद्येत्या॰मल-मासव्रत सांगतासिध्यर्थं श्रीलक्ष्मीजनार्दनप्रीत्यर्थमपूपवायनदानं करिष्ये ॥ तदंगभूतां ब्राह्मणपूजां क॰ ॥ नमोस्त्व-नंता॰ १ श्रीजनार्दनरूपिणे ब्राह्मणाय इदमासनं ॥ पाद्यं अर्घ्यं ॥ आचमनं ॥ गंधाःपान्त्वित्यादि ब्राह्मणं संपूज्य ॥ वायनं हस्ते गृ॰ तत्र मंत्रः ॥ अधिमासे तु संप्राप्ते श्री जनार्दनतुष्टये ॥ नरकोत्तारणार्थाय मया दानं प्रदीयते॥ त्रयस्त्रिंशदपूपांश्च शर्कराघृतसंयुतान् ॥ स दक्षिणान्यहं तुभ्यं कांस्यपात्रे निधाय च॥ दास्ये जनार्दनप्री-त्यै गृहाणत्वं द्विजोत्तम ॥ मलमासस्तु मासानां मलिनः पापसंभवः ॥ तत्पापस्य विशुद्ध्यर्थं वायनं संप्रदाम्यहं ॥

अग्नि होत्रं तपः सत्यं वेदानां चैव पालनं ॥ आतिथ्यं वैश्वदेवश्च इष्ट मित्यभिधीयते ॥ १ ॥ वापीकूपतडागादि देवता मंदिराणि च ॥ अन्न प्रदान मारामाः पूर्त मित्यभिधीयते ॥ इति अत्रि स्मृतौ ॥ ४९ ॥

---

वो तेनो निष्क्रयद्रव्य दानसंकल्प करवो,पछी आचार्यने काम करावबा बदल एकगाय तथा निष्क्रय आपवो.ब्रह्माने एक गोधो तथा तेनो निष्क्रय आपवो तथा मंड-ळनो उपहारपूर्वक संकल्प करीने आपवु, एप्रमाणे आपवुं शास्त्रसंमतछे. पछी करेलुं कर्म गोलोकवासी भगवानने अर्पण करवुं. चरणीवाळा ब्राह्मणोने दक्षणा

सदक्षिणाघृतताम्बूलसहितं सद्वस्त्रवेष्टितं तुभ्यमहं संप्रददे ॥
इदं त्रयस्त्रिंशत्संख्यकापूपवायनदानं कांस्यपात्रस्थितं सदक्षिणाघृतताम्बूलसहितं सद्वस्त्रवेष्टितं तुभ्यमहं संप्रददे ॥ अनेन वायनदानेन श्रीजनार्दनः प्री० ॥ कृतस्य मलमास० ब्रह्मन् प्रतिगृह्य० । प्रतिगृण्हामि । यस्य स्मृ० ॥१॥ अनेन वायनदानेन श्रीजनार्दनः प्री० ॥ कृतस्य० आचार्यादीनां वस्त्र ताम्बूल दक्षिणादिभिः पूजनमित्यादि इष्टजनैः अयं ते वर· प्र० इति पूर्णपात्रदानं ॥ कृतस्य० आचार्यादीनां वस्त्र ताम्बूल दक्षिणादिभिः पूजनमित्यादि इष्टजनैः सह भुंजीतेत्यंतं पूर्ववत् ॥ कुंभसंकल्पे विशेषः ॥ कृतस्य० इमान् त्रयस्त्रिंशत्संख्याकान् ( त्रिंशत्संख्याकान्वा ) कुंभान् पक्वान्नपूरितान्वस्त्रताम्बूलदक्षिणादिसहितान् सौभाग्य वस्त्र सहितां त्रयस्त्रिंशति वा (त्रिंशत) वंशपात्रीसहि- तान् नानागोत्रेभ्यो नाना नामभ्यः सपत्नीकेभ्यो ब्राह्मणेभ्यो विभज्य विभज्य यथाकाले दास्ये ॥ इति विशेषः॥

विप्रार्पितानि कर्माणि सफलानि भवंति हि ॥ अनर्पितानि कर्माणि भस्मनीव हुतं हविः ॥ नित्य नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ॥
विष्णोः समर्पितं सर्वं सात्विकं फलदं भवेत् ॥

---

आपवी, तया ब्राह्मणभोजन भूयसीनो संकल्पकरवो. तथा तुलशीपनलइ क्षमामागी ब्राह्मणोने पूछवु के अहो ब्राह्मणो माराश्रद्धाभक्तीथी जे मैं कर्म आ कर्युं छे ते परिपूर्ण थयुं, एम पूछवाथी ब्राह्मणोये केहेवु परिपूर्ण थयु पछी एक कासानापात्रमा आलपूडो मुकी बीजु पात्र उपरढांकी तेने सुतरथी बांधी ते लेनार ब्राह्मणनु पूजन करीने आपवुं एने वणाइदान कहेछे, ए विधि करवो होय तो करीने पछी, यजमानने तिलक करि आशिर्वाद आपवो यजमाने प्रसादलइ

अन्यत्सर्वं पूर्ववत ॥ . यथा शक्तिद्रव्यादिकेन यत्कृतं कर्म. तत्कालहीनं भक्तिहीनं श्रद्धाहीनं ब्राह्मणानां वचनात्
स्थापितदेवताप्रसादाच्च सर्वं परिपूर्णमस्तु ॥ भो ब्राह्मणाः सर्वपरिपूर्णमास्त्विति भवंतो ब्रुवन्तु ॥ अस्तु परिपूर्णमि-
तिद्विजाः ब्रुयुः ॥ इति त्रिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो
वंदे तमच्युतं ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादितिः श्रुतिः ॥

स्थानपरथी उठी पोताना वडिलोने अभिवंदनकरी पोतानाकार्यभारमां प्रवेश करवो. आ प्रमाणे साधारण रीतो दरेक ज्ञातोमा चालती लखीछे. जे बधी
ज्ञातोमा थवी जोइए छे ते लखीछे. उता बीजाओनी ज्ञातमा वधारे अथवा ओछीनो, जे चाल होय, तेणे पोत पोताना रिवाजो प्रमाणे करी लेवु. आ
मथ. कर्म शास्त्रार्थ, तथा स्त्री साथे सपूर्ण थयो छे. इति श्रीजयानंदात्मजमूलशंकरशर्मणा विरचिताया विवाहकौमुद्या तृतीय प्रकरण॥ विवाहकौमुदी समाप्ति
मगमत् ॥ शुभं भवतु ॥ स. १९६९ आषाढशुद्ध १५ शके १८३१.

विष्णवेनमो-विष्णवेनमो विष्णवेनमः ॥



॥शार्दूल विक्रीडितम्॥ तापी दक्षिण दिग्गतासि नगरी नंदावतीति श्रुता। तत्र श्रोत्रियभूसुराः प्रबभुर्विधैक- ॥विद्याराम इति श्रुतास्तनुभुवास्तेषां तु ज्येष्ठा गुणैः।श्रीमन्तः शिवशंकराख्यगुरवस्तुष्यन्तुकृत्याऽनया॥१॥

भिः प्रकरणैर्युक्ता सैषा वैवाहकौमुदी ॥ बालानां तिमिरं हन्याद्द्यान्मोदं श्रियाधिकम् ॥२॥

गत सामवेद कौथुमीशाखाध्यायी सूर्यनगर वास्तव्य श्रीमाली द्विज जयानंदात्मज

र मूलशंकरशमर्णा विरचितायां विवाहकौमुद्यां तृतीयं उद्यापनप्रकरणम् ॥

समाप्तोऽयं ग्रंथः ॥

---

## आ पुस्तको नीचेने ठेकाणे मळशे.

१ विवाह कौमुदीः—जेमां त्रण प्रकरणो छे,प्रथम प्रकरणमां ग्रहशांति प्रयोग,बीजा प्रकरणमां विवाहविधि तथा त्रीजामां पुरुषोत्तम मासनुं व्रतोद्यापन, जेमां सघळो विधि आपवाथी विधिने नहि जाणनारा पण करावी शके एम छे. कि. रु. १॥ ट. -।-

२ मुग्धाकथा—पुरुषोत्तम मासमां जे कथानुं माहात्म्य घणुं ज गणायछे तथा ते हजु सूधी छपायली न होवाथी शुद्ध गुजराती साथे हालमां बहार पाडवामां आवी छे. किं. -।- ट. -)-

३ सतीसिमंतिनी—आमां पतिभक्ति केवी उत्तम प्रकारनी छे तेनुं अद्भुत चरित्र आपवामां आव्युं छे. आ पुस्तक गुजराती राग रागणी वाळुं छे तथा ते स्त्रीओ नाहीने हमेशां वांचे छे. किं. ।- ')०॥

४ साठी—आमां लग्नसमये हस्तमेलापकनी वखते दंपतीनुं जोडुं कुशळ रहेवामां आशीर्वादात्मक श्लोक आपवामां आव्या छे.की.०।ट. ')०॥

ओजा मूळशंकर जयानंद, सुरत—देसाई पोळ.

शास्त्री घेलाभाई भवानीशंकर, सुरत—आमली रान, संस्कृत पाठशाळा.

ज्योतिर्विद् रणछोडलाल काशीराम, वडोदरा, अडाणीया, पितांबरपोळ.

रा. रा. हरिभाई सोमनाथ, सुरत—हरिपरा.

बुकसेलर—ज्येष्ठाराम मुकुंदजी, काळकादेवी, तेलवाडी पासे, मुंबई.

रा. रा. इच्छाराम सुरजराम देसाईनो गुजराती प्रेस, कोट—मुंबई.

ओजा मूळशंकर जयानंद.

